[ शिक्षा तथा समाजकल्याण मन्त्रालय, भारत सरकार द्वाराप्रदत्तेन आर्थिकसाहाय्येन प्रकाशितेयम् ]

# ललित कथाकल्पलता




रचयिता

'महापुरा' जयपुर राजस्थान-भारत वास्तव्य· पौराणिकमार्तण्ड-पण्डितराज-गोस्वामि गोपीकृष्णात्मज· न्यायोपाध्यायः शुद्धाद्वैत वेदान्ताचार्य· साहित्याचार्यः शीघ्रकवि कविचूडामणिः गद्य-पद्यसम्राट् भूतपूर्वप्राचार्यो-गोस्वामी हरिकृष्ण शास्त्री




# विनम्र - प्रणिवेदनम्

"सम्प्रति सर्वात्मना समृद्धेऽपि सस्कृत साहित्ये, वस्तुतो लघु-कथाना कथानिकाना ( कहानियो का ) प्रायशोऽत्राऽभाव एव दृग्गोचरी-भवति। कथानिका अपि यत्र कुत्राऽपि मिलेयुश्चेन्न तथाविध-ललितगद्ये-पद्ये समुपलभ्यन्ते।

पाठकाना रुचिर्हि वर्तमानकालिकीषु हिन्दी विषयिणीषु लघ्वीषु कथासु यथा जागर्ति, तथैव संस्कृतभाषानिबद्धासु समृद्धासु प्रवृद्धैव वर्वर्ति।

मनोरञ्जिकासु [ मनोरञ्जनकारिणीषु ] "ललितकथा कल्पलतासु" वासन्तिक कुसुमसमृद्धि समुज्जृम्भित भावना वैभवविलसितासु विलोक्यते सरससुभग सुमनो मकरन्दपान लालसालसितेति-कृत्वा, सस्कृतमय्याः सुरसरस्वत्या सेवाहेवाकाना तथाविध-क्षतिपूर्तये विहितोऽयं प्रयासः सहृदयहृदयग्राही भविष्यतीति-विद्वत्तल्लजाना सुरसिकाना करुणा-वरुणालयानां निःष्यन्दितसुभगकारुण्यपूर्णां मधुरप्रेक्षणां कामयतेऽयं "ललितकथाकल्पलता लेखको—

वशंवदो

हरिकृष्णगोस्वामीति

# विषयानुक्रमणिका

# साकारः स्वप्नः

अधुना यथाकथञ्चिन्नयनपुटके मुद्रिते एवास्ता सहसैव शिशुरक्रन्दत् । वराका नलिनी श्रान्ता शिथिला सर्वं दिनं रुदती "श्वः किं भविता, कुतः आनेष्यामि" इति स्वोदरभरणचिन्तने निमग्ना सती निद्रादेव्याः शरणमागतासीत् । नेत्रयोरुपरि तु मन्येऽतुलो भारः समापतित इव चक्षुषी समाक्रान्ते अभूताम् । समुन्मीलितु कृतेऽपि यत्ने नयनपुटके नोन्मीलिते जाते । शिथिलञ्च शरीरं शय्यायां निश्चेतनमिव पतितमासीत्, समुत्थापनशक्तेरभावेऽपि, बलादिव स्वदक्षिणभुजं शिशोः पार्श्वभागे प्रवेश्य तमाकृष्य स्वात्मसमीपं हृदयसलग्नं कुरुते । पुच्च-पुच्च, हन्त, अपसर रे कुक्कुर ! इति कथयन्ती नलिनी तं प्रशान्तं मौनं कर्तुं भूयो भूयश्चेष्टामकरोत् । किन्तु बालकस्य स्वरे तीव्रता समायाति स्म । कण्ठस्तु ध्वनिविस्तारकयन्त्रमिवाचरति स्म । नीरवनिशीथस्य शान्तिमये साम्राज्ये तस्यैकमात्रं कण्ठरव एव विद्रोहमिवातनुते स्म । दूरं दूरं यावत् भवनेषु प्रासादेषु च ससुखं शयनसौख्यमनुभवतां सुकृतकृतिमतां नयनोपवने विहरन्त्या निद्रादेव्याः स्वच्छन्दतायां तद्बालक्रन्दनं बाधामेव समुत्पादयामास ।

परिणाम-स्वरूपे क्षणार्थं तु समन्तान्निवसतामतिनिकटवर्तिनां भवनेषु तु प्रभातस्य प्रथमः किरण इव प्रस्फुटितः समभूत् । विरलतमतारा इव नयनताराः समुन्निद्रिता इव प्रतीयन्ते स्म । पक्षिणां मधुरः सुस्वरः चूँ चूँ ची ची - विरावः इव दूरवर्तित्वादस्पष्टः इव मनुजानां समा-

लापः श्रुतिपथमुपगतोऽभूत् । अत्रान्तराले सम्मुखस्थाद् भवनात् सहानुभूतिमय्येका वाणी सहसाऽश्रूयत, "बालकः एतावत् किमर्थं रोदिति" इति ।

"किं करोमि निर्दयो मौनमपि नादधाति" एहि गृहाण गृहाण, कथयन्ती नलिनी बाल स्तन्य पाययति स्म । यदा हि बालः पर्य्याप्त यथेष्ट वा दुग्ध न लभते, तदा सः क्षण मौनः सन्, पुनस्तथैव 'ग्रामोफोन' नाम्नो वाद्यस्य सगीतरिजीष [ रिकार्ड ] इव स्वसगीत पुनः प्रावर्तयत् [बालकः पुनः प्रारुदत्]। तस्य स्वरे क्रन्दने] साम्प्रत तीव्रा वेदना, उष्णो निःश्वास. आशायाः भङ्गस्तेनैव सह करुणायाः विशेष साम्राज्यमप्यासीत् । स्वरस्य तीव्रतायान्तु हारमोनियमवाद्यस्य तारसप्तकस्थपञ्चमस्वरोऽपि लज्जते स्म । बालस्य क्रन्दनमवरोद्धु बहुधा यतमानाऽपि सा सर्वथा विवशा सती, स्वयमपि नलिनी तमनुकुरुते स्म [ अरोदीत् ] ।

इतः समीपे एवैकस्या त्रुटितखट्वाया निपतितो दिनेश स्वजीवनस्य नवीनमेव किमप्यपूर्वं निर्माण कुरुते स्म । समाराधयति स्म च सुपरिचिता व्यथितजनप्रिया निद्रादेवीम् ।

अनयैवाराधनया सन्तुष्टा सुलभवरदायिनी नयनसुखास्तरणशायिनी निद्रादेवी तस्मै यमेव वाञ्छित तमेव वरमदात् । तथैव सरक्षणे इत उत्थाप्य तत्र, तत उत्थाप्य चात्र सुव्यवस्थितीकरणे तावान् व्यस्तः सः- [दिनेशः] आसीत् यत् क्षणमपि शान्त्यैकत्र स्थित्वाऽपरस्य सुखदुःख विषयिणी वार्तामपि श्रोतु नावसरं लब्धवान् ।

साम्प्रत तस्य सम्मुखे बहूनि कार्याण्यपरिसमाप्तान्यासन्; यानि तस्य लेखन्या आह्वानमिव कुर्वतेस्म । अधुनैव महाराजस्य श्रीरत्नसिंहस्य राजसभाया सरसाया एकस्याः कवितायाः नवनिर्मिताया उपलक्ष्ये पुनः पुनः प्रशसावचनशतैरभिनन्दनपुरसर भारतीय सर्वोत्कृष्ट पुरस्कार प्राप्य समायाते तस्मिन् दशमिनटात्मक एव कालो व्यतीतो जातः, प्रस्वेदबिन्दवोऽपि न सम्यक् शुष्कता गताः आसन् समन्तादाग्रहोपर्य्याग्रहः

प्रारभत। कोऽप्यकथयत्-अस्माक कविसम्मेलने पद धार्यताम्, तु कञ्चिन् न्यवेदयदत्रास्मद्राजसभाया समायान्तु भवन्त, इति न शान्त्यैकत्र ससुखं क्षण विश्रामस्यावसरो मिलति। यद्यप्यस्मिन्नवसरे महाराजस्य विशेषरूपेण कृपापात्रपरिजनेषु परिगणितः समभूत्, अत एव स्वकीयेन विशिष्टमरुत्तरयानेन ससम्मानं स्वगृह यावत् प्रेषितो महाराजेन, तथापि नितान्त श्रान्त इवासीद् दिनेशः पुष्पहाराणा भारेणावनतकन्धरश्च। अनेकानेकैः नागरिकरसिकश्रोतृभिः समर्पितैः सुवर्णरजतापदकैः मुक्ताभरणैर्वा तस्य समलङ्कृतासीद्वक्षस्तटी। पुनः पठ्यताम्, पुनः श्राव्यताम्, उच्चैस्तराम् इत्यादि वारवार जनतारवैः सह मुहर्मुहर्द्विगुणतरेणोच्चैः कण्ठस्वरेण भाषणात् कण्ठोऽपि कुण्ठित इव, विस्वरतामयते स्म। यद्यप्याघत इवासीद्गले, तथापि गर्वोन्नतमस्तकः, मुखमण्डले च नवीनैव सम्मानश्रीरधिकाधिकमाभाति स्म, श्रान्तत्वेऽप्युत्साहाधिक्यमेव।

"क्रो किर र र र" इति मरुत्तरशकट्याः शब्दे श्रुतिपथमुपगते सत्येव तस्य प्रेयसी स्वपतिं राजसभासभाजित विविधोपहारैः सम्मानितं हृदयेश्वरं समायान्तमालोक्य तदीयस्वागताय द्वारोपरिस्थिता प्रतीक्षते स्म। मरुत्तरशकटीतः समवतरणात् प्रागेव, आरार्तिकावतारणाय समवयस्कस्वसहचरीसनाथा प्रासादश्रीरिव समुपस्थिता, दूरत एव मन्द-मधुरस्मितावलोकनसमुल्लासितोत्साहा राजते स्म तत्सम्मुखे च तदीया प्रिय सहचरी। किन्तु न सा तावन्तमपि समय लब्धवती यस्मिन् सा स्वदयितस्य विजयिनः आरार्तिकन्त्ववतारयितु शक्ताऽभवत्, तच्चरणयोश्च यथेष्ट स्वकीय श्रद्धाकुसुमाञ्जलिं वा समार्पयत्। तयोः परस्परं दर्शनेन नयनयुगलद्वन्द्वमपि न यथेष्टा तृप्तिसमालभत। हृदयं हृदयेश्वरमाश्लिष्य न शान्तिमुपैतिस्म, तदर्थं वारिविरहितो मीन इव प्रास्पन्दत। यथोद्दिष्टस्थानोपरिगमनात्पूर्वमेव कतिचिन्मण्डलितानि, कतिपयान्यर्धोन्मीलितानि, पत्रवण्डल-मण्डलानि तेष्वपि कानिचिन्मुद्रितान्येव कतिपयानि हस्तलिखितान्येव पत्रपत्रिकादीनि दैनिकसमाचारपत्राणि स्वकक्ष-

भागे सगृहीतान्यादाय धावन् 'विज्जू' यो हि साहित्यिकभाषाया 'विजय' नाम्ना व्यवहृतोऽभवत्, यस्य च कार्यं केवल पत्रप्रेषणकार्यालयात् पत्राद्यानयनमेवासीत् - समागत्य स्वामिन् ! अद्यतनान्येतान्येव पत्राणीत्युक्त्वा सम्मुखे सङ्गमर्मर - प्रस्तर - मञ्चे पीठियाया वा सरक्ष्य, ग्रीष्माधिक्यमनुभूय वायो. व्यवस्थार्थं विद्युद्व्यजनमानेतु तालवृन्तव्यजन वा समानेतुमभ्यन्तर सद्योऽधावत् ।

दिनेशस्तत्रैव द्वारसम्मुखे विद्यमानाया समारोपिताया सुमनोवाटिकायां स्थित्वा तानि नवागतानि पत्र-पत्रिकादीनि क्रमशः सर्वाण्युन्मील्या, पठित्वा च कानिचित् मञ्चाधोभागे कानिचिच्च मञ्चोपरि, कतिपयानि स्वकीयायामावश्यकपत्ररक्षणपञ्जिकाया बहूनि चैकतः कक्षकोणे रक्षतिस्म । पार्श्वस्थ स्वकीय सहायक लेखक व्यवस्थापकञ्च सम्बोध्य पत्राणा यथोचितमुत्तर प्रेषयितुमप्यादिशति स्म-यत् गृह्यतामेतत् स्वपार्श्वमेव सुरक्षित स्थापय, एनत् मामेव श्वो राजसभाया प्रस्थानकाले प्रत्यर्पणीयम्, अस्योत्तरञ्च लिखतु भवान्. यत् मान्यवर ! महानुभाव ! निमन्त्रणपत्र लब्धम् श्री महाराज निवेद्य, तदाज्ञाञ्च प्राप्य यथासमयं शीघ्रमेव तत्रागमनाय प्रयतिष्ये' किमन्यत् ।"

आम् अस्याप्युत्तर प्रहिणुहि "प्रियसम्पादकमहोदय ! नमः, खेदास्पदमेतत् यदहमधुना श्रीमत्पत्रिकायाः सरस्वतीनाम्न्याः सेवार्थं साम्प्रतिकराजकीयकार्याधिक्याद् विवशो न लेख प्रेषयितु शक्तोऽभव, एतादृशलेखप्रेषणसौभाग्यवञ्चितः सम्प्रति क्षमामेव याचे, आगमिन्याः सञ्चिकायाः कृते यावच्छक्य प्रयतिष्ये" इति ।

गृह्यतामेतत् - सद्योऽङ्कटङ्कणयन्त्रेण [ टाइपरायटर ] अवटङ्क्य मद्धस्ताक्षरार्थं त्वरितमानीयताम् । सावधानतयोट्टङ्कणीयमेव सर्वथा विशुद्धेन भाव्यम् । अन्यथा मत्सम्मुखे प्रथम पठ्यताम् "आदरणीयाः उपकुलपति महोदयाः ! नमः 'पुरातत्त्वविज्ञानम्' पुस्तकमिदं एम् ए. पाठ्यक्रमे रक्षयित्वा स्वीयौदार्य्यं यत्प्रकटितम् तदर्थंमह महोपकृतोऽस्मि ।

"सूचनया सह यल्लिखितं श्रीमद्भिः यत् पुस्तकेनानेन साहित्यक्षेत्रे तु नवीन एव युग' प्रवर्तितः, प्रगतिशीलाना युवकाना कृते तु सामाजिक-धार्मिकराजनीति सम्बन्धिनी च विज्ञानान्त-पातिनी महत्येव क्षतिः पूरिता तदर्थमय विश्वविद्यालयोऽपि कृतज्ञता मनुते" इत्यादि लेखनस्य कारणन्तु केवल महता महानुभावत्वमेवेति नान्योऽथवा कश्चनैतादृशो गुणो ह्यकिञ्चनकरेऽस्मिञ्जने" श्रीमता सौहार्दौदार्याद्युपकृतः— लेखकः— ... — ... .. ... — ... ... ... ...।

अधुना तु बहूनामेवोत्तरलेखनमवशिष्टमासीत् - सहसैव 'सर " र र' टुप' कृत्वा मरुत्तरशकटी समागत्य स्थिताऽभूत् । क्षणार्धेनैवैकः कश्चन सभ्यपुरुषः समागत्य, प्रणामं कृत्वा न्यवेदयत् —

महाराज ! युवराजेन समादिष्टोऽह श्रीमत्सकाशमुपागतः उक्तञ्च युवराजेन - मद्वचनात् कविराजो बोधनीयः-"यत् गतदिने महाराजसम्मुखे राजसभाया या नवीना 'रचना' भवता श्राविता - तामानीयात्र पद धारयन्तु भवन्तः" इति । श्रुत्वा कविराजः प्रावदत् भवतु, क्षण तिष्ठ, त्वया सहैवाह चलामि - इति ब्रुवन् राजसभोचित वेषविन्यास कलयितुं पार्श्वस्थं स्वभृत्य विनोद चेष्टया व्यापारयामास वस्त्राण्यानेतुम् । पुनः किञ्चिद् विचिन्त्योक्तवान्-अस्तु त्वमत्रैव तिष्ठ, स्वयमेवाह गत्वा धारयामीति वदन् कक्ष विवेश ।

अधुना पञ्चमिनटात्मकोऽपि नात्यगात् कालः कश्चनैको रक्तवर्णां द्विचक्री [साइकल] चालयन् धावन्निव, हरितधूमिलवासासि परिदधानः, द्विरगरञ्जितोष्णीषं (साफा) दधत् समागतः । यस्य हस्ते हरित-श्वेत-पीतवर्णानि बहूनि पत्रपुटकानि, तैरेव सह श्वेतानि नामाङ्काङ्कितानि पत्राण्यप्यासन् येषु कतिषु चित्स्थानेषु भिन्न-भिन्नपुरुषाणा हस्ताक्षराण्यासन्विद्यन्ते स्म । स च समीपमागत्य प्रणाम कृत्वा न्यवेदयत्-भगवन् ! इदम् तडित्तन्त्रीवृत्तमयपत्रं (तार) पत्रेऽस्मिन् हस्ताक्षराणि कुर्वन्तु श्रीमन्तः इति वदन् पत्र समर्पितवान् । सहयोगिना पत्र गृहीत्वा हस्ताक्षराणि

दत्तानि। सर्वाणि समुद्घाट्य पठितानि च। आसन् तानि पत्र-सम्पादकैः प्रेषितानि पत्राणि, यैः तत्कविता प्रेषयितुमाग्रहः कृतः, यतो हि रेडियो द्वारा तस्याः कवितायाः प्रसारण कृतमासीत्। अतः स्व-स्वपत्रेषु प्रकाशनार्थं याचना कृतासीत्।

यथाहि दिनेश द्वारोपरि समागतः, तदानी सर्वाणि तारपत्राणि क्रमशः श्रावितानि। तदुत्तरे तस्याः कवितायाः प्रतिलिपीः कारयित्वा प्रेषयितु त स्वसहयोगिन समादिशन् दिनेशः मरुत्तरशकटी प्रति प्रवर्धमान एवासीत्, स्वभवन-मरुत्तरशकट्योरन्तराले त्वनेके नागरिकाः कवयः विद्वासः चारणादयः समुपस्थिता आसन्, दिनेशस्यागमन प्रतीक्षन्ते स्म। बहवो नवागन्तुकाः विद्वासः कवयश्च समस्ता एतामेवाशा बध्वा-ह्युपस्थिता आसन् यत् तेषा विद्वत्तायाः काव्यशक्तेर्वा प्रकाशनावसरः महाराजसमीप गत्वा समालापस्य स्वगुणप्रकाशनस्य च लाभो भवेत्। दिनेशबाबू तेषा परिचयञ्च महाराज कारयेदिति। दिनेशोऽपि समेषां यथोचित सम्मान विदधत्, मरुत्तरशकटीसमीपमागन्तुमेवासीत् ततः पूर्वमेवैक पत्रमाग्लभाषामयं करे बिभ्रत् मन्दस्मितवदनो रजनीशः समागतः। अय हि दिनेशस्याभिन्न मित्रमासीत्। मिथः प्रणामानन्तर विहसन् रजनीश प्रावोचत्—"किमर्थं भवानेतावान् व्यस्तः आतुर इव प्रतीयते अधुना ? अस्ति किमु काचन नवीना वार्ता ?"

दिनेश—नहि मित्र ! वार्ता तु सर्वथैव साधारणैवास्ति, किन्तु जनाः न जाने किमर्थमेना एतादृशी गौरवमयी मन्वते किमर्थं वा वैशिष्ट्यं प्रयच्छन्ति ?

रजनीशः—"भिन्नरुचिर्हि लोकः" जनेभ्यो यद्रोचते तद्रुचिरम्"

दिनेशः—"आह" तेषा त्वभिलषितं, ( अभिरुचिः ) मम चापद् ! अहो, कीदृशोऽय प्रकारो ह्यभिरुचेः, येनान्यत्कृते सङ्कटम्।

किमिद रुचिरम् ? यथाकथञ्चिदधुनैव तु सुखक्षणो लब्धः, पुनः क्षणार्धेनैव तथैव तैलयन्त्रचालकबलीवर्द इव कार्यसम्पृक्तता, किं कथयामि, मम तु सर्वाङ्गान्यपि लय यान्तीव ।

"अधुनैव समागतो गृहं, क्षणमेकं न सुखं स्थितोऽभवम् ।
सहसैव समागता पुनः शकटीयं किमु नेतुकामुकी ॥१॥

रजनीशः - आः, वयस्य ! किमर्थं व्यर्थमेवातुरो भवसि, "कथयैन क्षण तिष्ठ चलाम" । इति वदन् — दिनेशस्य बाहुं स्वबाह्वन्तरे कृत्वा तमेकत्र सघनलताकुञ्जमनयत् ।

आच्छादिते निविडनम्रलताप्रतानैः
नीरन्ध्रसान्द्रनवपल्लवजालमाले ।
उन्निद्रनैकविधमञ्जुलपुष्पपुञ्जे
कुञ्जे प्रविश्य विशदोपलपीठिकायाम् ॥२॥

नृत्यन्ति यत्र कुसुमानि, मुदोल्लसन्ति
प्रोद्यन्ति पल्लवकुलानि हि तालदाने ।
भृङ्गावलीमधुरझङ्कृतिमुद्गिरन्ती
तन्त्रीनिनादमिव गायति पक्षिमाला ॥३॥

स्थित्वा परस्परविनोदसहासलेशै-
श्लेषैः प्रसादमधुरैरधरैर्निपीता
पीतोज्झितापि रसनोल्लसनं विधातुं
प्रावर्तताऽमृतसमाऽऽलपनक्रमाली ॥४॥

उभावेव सुहृदौ सस्नेह सपरिहास सोत्कण्ठ संलपन्तौ स्फटिकसन्निभे शुभ्रसगमरमरप्रस्तरनिर्मिते सिंहासने स्थितौ सुखदशीतलमन्दसमीरसौख्यस्पर्शं विविधकुसुमराजिसुरभि - सुभगराग - पराग-

पटलपरिमल सान्द्रशीतलच्छायासौख्यञ्चानुभवन्तौ सुचिरं समालापक्रमं प्रवर्तयन्तावतिष्ठताम् ।

दिनेशलिखित 'प्राचीनदर्शनेषु आधुनिकयुगविवेचनम्' नामकं पुस्तकमस्मिन् वर्षे 'नोविल पुरस्कारेण' सम्मानितमभूत् - इति घोषणा समस्ते भारते प्रसृताऽभूत् । तत्सम्बन्धे एव परामर्शः प्रासरत् । रजनीशहस्तेऽपि तदेव आग्लभाषामय पत्रमासीत् - यस्मिन् तत्पुरस्कारविषयिणी सूचना प्रकाशितासीत् । स्थूलस्थूलाक्षरैस्तदेव लिखितमासीत् ।

अद्य रजनीशः बृहतीमेका योजनामादायागतः । किन्तु दिनेशः स्वकीयाभिः विचारवीचीभिः सह क्रीडन् गभीरे भावनीरे प्रविशन्नास्ते, अस्ति सम्प्रति तस्य सम्मुखे ह्येषा समस्या, यदत्रास्य 'नोविलपारितोषिक' स्य, (पुरस्कारस्य) केन प्रकारेण सदुपयोगः करणीयः ? इति । एतदर्थं केन सह परामर्शः करणीयः कवीन्द्राः श्रीरवीन्द्रनाथमहानुभावाः स्वसम्मतिदानार्थ प्रष्टव्याः आहोस्वित् महात्मा श्रीगान्धी बापू ? उताहो-महामनसो मालवीयाः परामर्शनीयाः, किंवा आधुनिकविचारसञ्चारचातुरीचणो नेहरूमहोदयः समालम्बनीयः ? इति विचारवारिधिनिलीनो दिनेशः सम्प्रति तथा निमग्नः स्थितोऽभूत्—यत् पार्श्वस्थ रजनीश स्वसुहृदमपि समालापार्थमेव समायात तन्मुख प्रति प्रेक्षमाण, अपि नापश्यत् - न वा तमनुस्मरति यदय किमर्थमत्रागतः, कि कुरुते, किमवधत्ते, किमाचष्टे चेति ।

रजनीशः तथाविचारनिमग्न तमन्वीक्ष्य साट्टहासमवदत्-अहो वयस्य ! कस्मिन् विचारे निमग्नोऽसि ? कथमेतावान् व्यग्र ? अह तु त्वया सहैव समालापार्थमत्र समायात , इति वदन्नुच्चैर्जहास रजनीशः ।

दिनेशः—सस्मितमुवाच—आम् समालपितुमह सन्नद्धोऽस्मि, कथयतु भवान्, कि न भणतु, भवानेव तु मामस्मिन् विचारपारावारे न्यपातयत्, न जाने कुत· कुतः समाचारपत्राणि समानीय मिथ्या मनो-

विनोदमात्रपराणि प्ररोचनावाक्यानीव श्रावयन् व्यर्थमेव समस्या समुपस्थापयामास । कुतस्त्य वा पुस्तक, कुत्रत्यो वा स. नोविलपुरस्कारः। द्रक्ष्यामो यदा स सम्मुखमायास्यति, किमुत प्रागेव व्यर्थ तदर्थमेच्चिन्त नम् एतत् तु समाचारपत्रस्थ जगत् विद्यते, किमेतत्सकल सत्यमेव । भवतु, आम् - तर्हि भवते किमपि जल··· ··· — ···वाक्य पूर्णमेव नाभवत् - सहसैव - गृहणातु महाराजः, इति निवेदयन् विनोद समागत्य ताम्बूलस्थाली सम्मुखे स्थापितवान्, तमेवानुवर्तमान एव विजयोऽपि सुरभिपेयद्रव ( शर्बत ) सम्भृत पात्रद्वय समानीय सम्मुखस्थपीठिकोपरि रक्षितवान् अब्रवीच्च, बाबूजी । स्वल्पाहारार्थ किमपि मिष्टान्नमपि ---।

रजनीश प्राह—नहि मित्र । आम्, त्वन्त्वभ्यन्तर गत्वा मे ज्येष्ठभ्रातृजाया मामकीनान् प्रणामान् निवेदयेति । नाह महामानभूतः अतो नाधिका, मह्रीमानीकरणस्यावश्यकता । ततः दिनेशं प्रति पेयद्रवास्वादनायेङ्गित कुरुते—आम्, तर्हि·········। इति वदन् रजनीश पेयद्रवपात्रमुत्थापितवान् - यावत् सः पिबति, तावत् दिनेशोऽपि द्वितीयपात्रस्थ पेयरसमर्द्ध निपीय पात्रं पीठिकोपरि तथैव स्थापितवान् । ततो मित्रोचितविनोदाय ताम्बूलगलचर्वणपूर्वक परिहासक्रममारभेताम् । तस्मिन्नुभावेवैतादृशौ सपृक्तावास्ता यत् तौ स्वोद्दिष्टपथादपि भ्रान्तावभूताम् । सम्प्रति तौ नवपरिहासाध्वनि गच्छन्तावभिन्नसुहृदावपरस्मिन्नेव कस्मिंश्चिल्लोके समुपस्थितौ जातौ—यत्र नासीत्परितापो न क्लेश, न वा द्वेषो न चेर्ष्या । स त्वेकरस, एकगुणश्चासीत्-यत्र समस्ता प्राणिन एकस्मिन्नेव स्वरे स्वकीया सङ्गीतलहरी प्रसारयन्ति, चित्ताकर्षकञ्च रागमालापयन्ति । संवत्सरपर्य्यन्त सर्वदैव वसन्तोल्लासो दृष्टिपथमायाति नासीत्तत्रत्यैतादृशी काचन लता, पादपश्च यो हि सर्वथाऽऽमूलचूडम् नवनवकोमलपल्लवैः स्वानुराग, विविधकुसुमोद्गमैर्हृदयोल्लासं नैकविधफलसम्भारै. स्वजन्मसाफल्यञ्च न प्रकटयेत् । किम्बहुना-स्वल्पात्स्वल्पतरोऽपि जलाशयः श्वेत - रक्त - पीतादिविविधवर्णः विकसितैः कमलै कल्हारैः

कोकनदैरुपशोभितः समाकर्षति दर्शकचेतासि। तदानीन्तनानि तत्रत्यानि वनोपवनानि, विनताः वितताः सरसाः ललितलताः मन्दमन्दवायुना सन्देशहरेण दूतेनेव समान्दोलितान्तस्वान्ता, नवनवारुणप्रवालपटलव्याजेन प्रकटितानुरागाः प्रसृतप्रतानजालच्छलेन प्रियतमाश्लेषसौख्यलालसया प्रसारितनिजनिजभुजलताः, कुसुमकलिकोद्गारभारमिषेण दर्शितयौवनोल्लासाः, सुमनःकेसर-परागवर्षणापदेन प्रियतमस्वागतायैव प्रसारितपीतपटपटलाः, दयिततमदर्शनेन सञ्जातसफलमनोरथा इव महोत्सवं सम्मानयन्त्य इव स्वस्वहृदयेश्वरसम्मानायैव समर्पितप्रसूनपुञ्जोपहाराः, मकरन्दपानमदमत्तमधुकरमालामिषेण मदनलेखमिव प्रदर्शयन्त्यः, पतत्रिकुलकूजितच्छलेन प्रियतमगुणगणानुद्गिरन्त्य इव, सुखदशीतलसुरभितधीरसमीरेण समुपवीजयन्त्य इव राजन्ते स्म। स्वसमीपस्थपादपपुञ्जेन सह समाश्लिष्टाः व्रतितिततयोऽपि तत्र प्रियाप्रियतमयोरुपवनविहारमिव स्मारयन्त्यो वितन्वते स्म सुहृदोर्मोदम्। मञ्जुलमयेऽस्मिन् समयेऽभिन्नमित्रयोः समालापवर्णनमपि लेखनीशक्तेः परतर कार्यम्।

तत्र गतौ तौ सुहृदौ तत्रत्या वासन्तिकी छटा वीक्ष्य स्वयमपि स्वात्मानमेव विस्मृतवन्तौ जाताविति किमत्र बीजम्! कथमेतादृशौ विह्वलावभूतामित्यपि पुनः पुनश्चिन्तनेनाऽपि न ज्ञातवन्तौ तद्रहस्यमिति। स्थानस्यैव किमुतैतादृशः प्रभावः! यन्महान्तो योगिनोऽपि विमुह्यन्ति तत्र गताः। किंवा तयोरित्थमेकत्र स्थित्वा समालापसौख्यानुभवा यैष एवाद्य समयः समागतः, आहोस्वित् पुण्यलेशशेषोपभोगावसरः?

अद्यावधि तु एको ह्यपरेण सार्धं विनोद संलाप वा विधातु परस्परं सम्मेलनाय समागच्छति स्म, किन्तु दुर्दैवात् मिथः साक्षात्काराभावेन तत्रागत्य पुनः प्रतिनिवर्तते स्म। इत्थमनेकधोभौ सुहृदौ परिक्रमण कुर्वन्तौ न सम्मिलितावभूताम्। परिचङ्क्रमणन्तु प्रायः रजनीश एवाधिकाधिक कुरुतेस्म। दिनेशोऽपि नियतसमये निश्चितस्थले प्रतिमास-

मेकत्रैकदा रजनीशेन सह अमावास्यायामेव सम्मिलति स्म, किन्तु नाधिक-समयम्। पुनरेकोऽपरस्माद् बहुदूरदूरमभवत्भव-ति च।

रजनीशस्तु प्रत्यहमेव परिभ्रमति सम्मेलनाय, परन्तु सम्मेलन-सौभाग्यन्त्वेकवारमेव मासानन्तरं मध्येऽमावास्यामेव भवति। सम्भवतः अनयोरेव परिक्रमण, राशिभोग नक्षत्रभोगञ्च कलयन्ति जना मासि मासि सम्मेलनमेवोभयोः क्रमेण दिनेशस्यतु सक्रान्तिः रजनीशस्य च राशिभोगः कालो गण्यते गणकवरैः। परिक्रमणञ्चैतयोः सर्वदा भवति दिन-रात्रि-विधायकमिति, नाश्चर्यम्।

अस्तु, भवतु नाम किमपि, किन्त्वद्यैनयोः शुभागमन समागमसुख वा नैकोऽप्युभयोर्मध्ये विस्मतुं शक्ष्यते। सम्प्रत्युभयोः सम्मुखे परस्परानन्द-स्यापार पारावारः समुद्वेलित. प्रतिभाति। भावनालवल्योऽप्यानन्ददो-लारूढा इव प्रस्फुरन्ति। उभयो. समालापरसास्वादनरसिकाः मृदुपल्लवाः परस्पर मिलितास्तालदानसंसक्ता इवोल्लसन्ति। विहसन्ति च कुसुमकलिकाः, सन्दिशन्ति च मधुपावल्यः, सङ्गीतमिवोल्लासयन्तो विहगाः शाखामुत्प्लुत्य नृत्यन्तीव मादयन्ते मनुजमनासि। सर्वविधाः विलाससामग्र्यः समुपस्थिता आसन्, किन्तु प्रकृतेः परिवर्तनप्रक्रममपि न जानाति कोऽपि, किमुत तद्रहस्यान्वेषणम्।

को नाम कथयितुमपि शक्नोति यद् दु.खसम्भिन्नमेव भवति सुखम्। किंवा दुःखाभाव एव सुखशब्देन व्यवह्रियते। अथवा दु:खस्यैव प्रच्छन्नरूपं सुखमस्ति, इत्यादिसुखस्यैव मीमासा कुर्वन्तो विपश्चिद्वरा. 'विषकुम्भं पयोमुखम्" इत्यादिवाक्यानां प्रयोगमेवाकुर्वन्नेवेत्यपि सम्भवः।

तदानीमेव तस्याः सङ्गीतलहर्य्या. एवैका विस्वरा कर्कशा लहरी सहसैव न जाने कुतः कथ वा प्रासरत्। उभयोरेव सुहृदो. आनन्दोल्लास-विकासानुभवेनार्धोन्मीलिते नयने सहसैव विस्फारिते ह्यभूताम्। उभावेव चकितचकितौ समुत्थाय समागतां ता बीभत्सामिवोपस्थिता स्वरलहरी

गृहीतुकामौ तामनुसर्तुमिवोद्यतौ दत्तकर्णावतिष्ठताम्। तयोस्तदानीं तादृश्येवस्थितिरभूत् यथा मिष्टान्नमुपभुञ्जानस्य शिशोर्मुखमध्ये मिष्टान्नान्तनिपतिता मरीची कटुवस्तु (मिरचे) समागच्छेत् तस्या उग्रकटुभावेन विह्वल स भवेत् तथैवैतौ जातौ। व्याकुलावेव तमेव पन्थानमनुयातौ यतः सा करुणाक्रन्दनलहरी समायाति स्म।

तदा रजनीशस्य कर्णौ त प्रवञ्चयामासतुः या दिश सः प्रस्थितः न ततः स ध्वनिरागच्छति स्म, स तु तमन्वेष्टु गतो, गत एव। किन्तु दिनेशस्य लक्ष्य यथार्थफलदमभूत्। सहि माधवीलतामण्डप, विविधकुसुमपुञ्ज कुञ्ज, विलोकयन् तत्रैव समुपगतोऽभूत् यत. प्रासरत् सः ध्वनि'। अपश्यच्च तत्र गत्वा - दिनेशः अस्त्येकं जीर्णमिव गृह शीर्णमिवच्छर्दि, एकस्मिन् कोणे मृण्मयानि पात्राणि, कानिचित् मध्यतः स्फुटितानि तु कतिपयानि गलतः [कण्ठत] आसीत् कस्मिन्नेकस्मिन् किञ्चित् पर्य्युषितमाहार, पानीयञ्चापरस्मिन्। त्रुटिता खट्वा, अर्धनिर्माणानन्तरमेव परित्यक्ता, स्फुटिता स्थाली, त्रुटिता दर्वी, ग्रीवाविहीना रन्धनपात्रिका, (डेगची) साऽपि नीचैरधोदरं धूमधूसरिता बहिर्भागे, रिक्ता चाभ्यन्तरतः इतस्ततो गृहैककोणे मलिनानि जीर्णशीर्णानि विततानि वस्त्राणि, जीर्णकन्था' यस्या यत्र कुत्रचन तन्तुवयनकलाप्रतीयते स्म। अन्याप्यासीत्समीप एव पतितैका कन्था यस्यामपि सूत्राणि प्रोत्तानीवाभान्ति स्म। गृहस्यैकभागस्तूपरि खर्परैराच्छादित आसीत् यस्मात् सूर्यकिरणाः समागत्य गेहस्थकीटाणुविनाश विदधति स्म, तत्रैवासीद् वलभीः या हि विविधघुणगणनिवासभूता प्रतिक्षण चूर्णवृष्टिमिवातनुते स्म। सरला. क्वचन कुब्जायमाना अपि समुन्मत्ता इव दिगम्बरा भित्तयः लघुः प्राङ्गण., यस्मिन् चतस्र. चतुष्पादिकाः खट्वाः, द्वे अर्धसज्जिते, उभे च त्रुटिते भित्तिसलग्ने, आस्ताम्। अर्धनिर्मितयोरप्येका कूपाकृतिपृष्ठाऽऽसीत् तस्या मार्जारीसमाक्रान्ता लुञ्चितपक्षाकपोतीव, भृश जीर्णकलेवरा कथा विस्तृता(आस्तृता)सीत् तदुपरि काप्येका सुन्दरी मलिनजीर्णवसना स्वशिशु, स्तनयोरन्तराले वक्षसाश्लिष्टं कृत्वा शनैः

शनैः नयनजलधारा विमुञ्चन्ती निपतितासीत्। तस्याः सः शिशुः मुक्तकण्ठो रुरोद, यथा यथा सा तमवरोद्धुं यततेस्म तथा तथैव सः द्विगुणतर तारस्वरमालम्ब्य चक्रन्द। सा पुनः पुनः स्तन पाययति स्म परन्तु बालस्तु भाद्रमासे जलप्रपातस्याविच्छिन्नप्रवाह इव स्वरोदनप्रवाहं न मन्दीकुरुते स्म। दिनेशस्तत्र गत्वापृच्छत्।

दिनेशः–सुन्दरि। का त्व कञ्जपलाशाक्षी? कथमय ते शिशुः सकरुण रुदति? किमिम त्व सान्त्वयितु नालम्? मत्तो यदि काञ्चन सहायतामपेक्षसे तर्हि निःशङ्क निर्दिश सन्नद्धोऽस्मि तथा कर्तुम्।

दिनेश विलोक्यैव सा सुन्दरी द्विगुणतरेण स्वरेण मुक्तधैर्यम् रुरोद। अधुनाऽवधि यथाकथञ्चिद्रुध्वा, धैर्यमवलम्ब्य, स्वशोकोद्रेकमन्तःपरिताप प्रच्छाद्य स्थिताऽऽसीत् सम्प्रति तत्सहसा सूर्योदये नीहारमिव तस्याधैर्य विलुप्तमभवत्। शाटिकाञ्चलेनाश्रूणि प्रमृज्य कम्पितकण्ठेनोच्चैरब्रवीत्।

नलिनीः—प्राणनाथ? क्वासि, क्वासि, दयिततम किमर्थमित्थमपरिचितइव, दुर्दैवविलासविजृम्भित इव, केनाप्यलौकिककुकृत्यपरिपाकेन, अमानुषशापेन विस्मृतविस्मारितनिजनिकटसम्बधबन्धविशेष इव स्वाप्निक जगज्जालविमुग्धसन्मतिरिव सलपसि? इति निगदन्ती नलिनी प्रस्फुटससी-मीकर रुरोद।

दिनेशः—अद्यावधि स्वकीयापूर्वानन्ददोलाधिरूढ इव दिव्यसौरभ्योद्यानविलासवैभवानन्दमनुभवन् न कदाचन मानुषलोकोपतापसक्लेशकल्पनाकलुषितः कस्याश्चन तादृशविवशतासमुद्भूतनवनवाभिजाताशातसम्पातसन्तप्तायाः करुणकल्पनामपि सस्मार। स त्वधुनाऽपि स्वकीयसौख्यकल्पनादोलाधिरूढो मनोरथशतैः सहानन्दलहरीनिमग्न आसीत्, सहसैव तदानी तस्याः दोलायाः एकतरा रज्जुः स्खलिताऽ(त्रुटिता)भवत्। पतनभयात् दिनेशस्य हृदय प्रास्पन्दत, हस्तौ दार्ढ्य तत्यजतुः पादावपि

शैथिल्यमभजताम् । मुद्रिते नेत्रपुटके सहसा व्युन्निद्रिते जाते । अन्यस्या खट्वाया समुत्तानित दुकूल नाटकीया ह्यन्तिमा जवनिकेव सद्योऽपसृतमभूत् । सच, है, है, किम्भोः किमर्थ रोदिषि ? किमेतदिति वदन् दिननाथ इव समुपस्थितोऽभवत् । अशोचच्च यत् तस्याः समीप गत्वा तद्दु'खापनोदनाय यत्न कुर्याम्, सपदि स्वचोलककुक्षौ (कुरतेकी जेब मे) हस्त निक्षिप्य, ततः कतिचिन्मुद्रापत्राणि, यानि पारितोषिकरूपेणाऽधुना राजप्रासादाल्लब्धानि, तत एव कतिपयानि निष्काश्यास्यै समर्पयामि येनास्याः कष्ट दूर यायात्-सद्य एव तस्याः दीनतामयीमेना दुर्दशा निर्मूलामेवाकलयेयम्-प्रसादसुमुखीञ्चैना विदध्याम् । किन्तु हन्त ! दुर्भाग्यम् ! सा सम्पत्तिस्तु तत्रैवोद्याने न जाने विस्मारिता, क्व परित्यक्ता, क्व वा परिभ्रष्टाऽभवत् । यदा च तद्धस्ते किमपि नापतित, तदानी च यदा सः स्वप्रियतमायाः दुःखे ता समाश्वासयितु तया सह च सहानुभूतिं प्रकटयितु, न वा तदीय दु'खमपनोदयितु सशक्तोऽभवत् तदा कृतापराध इव आत्मान गर्हयन् नतमुखः एवावतिष्ठत सविनय मन्दमधुरमुवाच प्रिये ! क्षमस्व मामपराधिनम् ? वचन दत्वाऽपि कृतप्रतिज्ञोऽपि नाह ते कष्टमपोहितु प्रभुरभवम् । इति जल्पन् दिनेशः दीर्घनिश्वासं अमुञ्चत् । प्रावोचत्-देवि ! किं कथयामि, एष ते मया सह पाणिग्रहणबन्धनस्यैव दुष्परिणामः, यद्दुर्भगेन सह चिरसहवासजन्य प्रणयबन्धन परिकल्प्य ऊर्णनाभिरिव स्वयमेव रचयित्वा जाल, तस्मिन् स्वय निबद्धाभूः । किं करोमि सर्वथा त्वद्विपन्निवारणेऽहमसमर्थोऽस्मि-इति वदन् शिशु स्वाङ्के निधाय त रोदनान्निवर्तयितु स्वस्कन्धे त सलगय्य हस्तेन च तत्पृष्ठ शनैः शनैरास्फालयन् प्राभृशश्चापश्यत्-यत् बालकस्य कण्ठस्वर' विस्वरोऽभवत् न पुनः स्पष्ट स्वरे तादृश बालमाधुर्यमनुभूयते, शुष्को जातः कण्ठः इति विचिन्त्य, पात्रे किञ्चिज्जल सम्भृत्य बालस्य मुखे ततो जलबिन्दून्पातयामास । बालोऽपि शीतलवारिपानलब्धाश्वासनोऽतिमात्र रुदन् परिश्रान्तः क्लान्तः क्षण मौनो यथा ह्यभवत्तथैव निद्रादेवी सकरुण तं स्वाङ्कगतमकरोत् । रात्रिः स्वल्पमात्रमवशिष्टाऽभून्,

शीतलो वायुः प्रवहतिस्म, सोऽपि त समुपवीजयन् सुखयति स्म, शान्तो बालः ससुख क्षण सुस्वाप ।

साम्प्रत, प्रचण्डा घर्मवेला, प्रबलतरो ग्रीष्मकालः । लाहोर नगरे यदि तापमानम् ११६ मितमस्ति देहलीस्थन्तु ११३ मित विद्यते-यथा कथञ्चिद् भगवन्नामस्मार स्मार समय मध्याह्नवेलाञ्च यापयामः, यथा यथा भानुमान् मस्तकारूढो भवति, सहस्रकरस्य करसहस्रे सहस्रगुणिता ह्येव तिग्मता प्रवर्धते, तथा तथैव तापमानमपि विवर्धते, तत्सहनशक्तिरपि तथैव तापमानानुसारमेव प्रवर्धमाना प्राणिमात्र तापसन्तापाद्रक्षति । प्रचण्डमार्तण्डस्य चण्डांशुसन्तापतप्तबालुकामयतटीषु प्रवहन् वायु खरतरोष्णस्पर्शमयोऽपि निरन्तरौद्गमनशीलावच्छिन्नप्रवाहया प्रस्वेदधारया परिप्लुतशरीरे शीतल इवानुभूयते । भोजनानन्तर तत्क्षणमेव तन्द्रा, आलस्य, वा सकलजीवनिकायस्य शरीरोपरि स्वसाम्राज्यं स्थापयति । प्रचण्डग्रीष्मकाले, महत्यप्यौष्ण्ये, प्रवर्तितेऽपि प्रस्वेदप्रवाहे, जातेऽपि पूर्णसन्तप्ते शरीरे, सम्भवत्यपि प्रतप्तवायुखरतरस्पर्शजनितो द्वे जने, मध्याह्नकाले गर्भगेह गताना जनाना नयनच्छदपटलोपरि निद्रादेवी सद्य. स्वकीयामष्टखेलामारभते स्म । सा होरा कदा नि सृतेत्यपि न ज्ञायते स्म ।

यदा कदाचन दु.खेऽपि सुखच्छाया प्रतीयते, निराशायामप्याशा समुज्जृम्भते, अन्धकारेऽपि प्रकाशस्याभाऽऽविर्भाति । दिनत्रयाणा सर्वान् प्रयत्नान् निष्फलान् विलोक्य, दिनेशोऽपिदन्तैर्दन्तच्छद खण्डयन्निव भृशमावेशनिपततो लेखनी समाश्रितवान् । कतिपयाः पङ्क्तीरुल्लिखितवान् ह्यधुना बहुलेखनमुर्वरितमासीत्ः सहसैवोदरे मूषका कूर्दमाना इवायन्ति स्म । क्षुधा तीव्रतामादधाति स्म । मनोऽपि विचलितमासीत् । इन्द्रियाणि शिथिलान्यासन् । माया अपि सद्यः स्मृतिपथमागताः तत्क्षणमेव विगतपुण्यस्य जनस्य सत्क्रियाः इव विफलता नीता इव व्यलुम्पन् । किमस्ति लेखनीय, किं लिखित को वा भावो योजनीय. इति सर्वं व्यस्मरत् ।

क्षुधाविकलमानसः सुचिरसंधृतानुज्ज्वलान्
विशिष्टकविजीवनोल्लसितहावभावान् सकृत् ।
विमुग्धमतिरस्मरन्नहि चिरस्मरन्नत्यजत्
सुकाव्यरचनां, पुनः शुचिकथां समारब्धवान् ।।३।।

प्रतिदिन हिन्दीभाषायाः महत्ता प्रवर्धते स्म ! सम्भाव्यते, यत् भोजराजसाम्राज्ये सस्कृतभाषाया· साम्राज्यमपि तथैव प्रवर्धमानमासीत् । स्थाने 'स्थाने, सम्प्रति प्रवर्तंते साहित्यसम्मेलन, कविगोष्ठी, रचनाप्रतियोगिता च । अनेकस्थलेषु साहित्यगोष्ठीना स्थापना, प्रतिष्ठा, काव्यपाठाना, योजनाः समुपस्थाप्यन्ते । अस्मिन्नेव साहित्यक्षेत्रे विविधकार्याणामुक्रमः आवश्यकपदार्थाना निर्माणम्, प्राचीन-ग्रन्थानामन्वेषण, शिलालेखानामनुसन्धानम् समनुष्ठीयते । वहुधा, स्थाने-स्थाने उत्तमोत्तमरचनाभ्यः विशिष्टाभ्यश्च, कथाभ्यः आदर्शनिबन्धेभ्यः भूरि-भरि पुरस्कारा, स सम्मान वितीर्यन्ते । समाचारपत्रेषु प्रतिदिनं साटोप स्थूल स्थूलाक्षरैः प्रकाशित भवति, यत् अमुकस्थले साहित्य-समारोहः सानन्द सम्पन्नः समभूत् । सरसा कविगोष्ठी च सम्मानिता । अमुककथायाः कृते, अमुकविधपुरस्कारः समुद्धुष्टः अनुकरचना—अमुकपारितोषिकेन सम्मानिता इति ।

दिनेशस्यापि हृदये आशायाएकः किरणः प्रस्फुरित इवाभूत् । सहि प्रसन्नतयासह क्रीडतिस्म, मध्याह्नवेलाविहारिणा तिग्मतरोष्णवायुना, परिम्लानाः क्षुपाः, पुनः सायन्तन जलाभिषेकं प्राप्य यथेष्ट वा वारि निपीय तथैव पुनस्तारुण्य भजन्ते, तथैव मन्द-मन्दसमीरेण सह खेलतः आनन्ददोलाधिरूढा इव मोदन्ते तद्वत् दिनेशस्यापि भग्नावशिष्टा जीर्ण-शीर्णा वा आशालता, भावनावल्लरी वा सहसा तरुणिमानमलभत । लेखनीयमपि स्वकार्ये साफल्यमवाप्तवती । मन्ये, हि नलिन्याः करुण-क्रन्दनमेव प्रकृतिपिशाचिन्याः पाषाणमये हृदयेऽपि कामप्यपूर्वां वेदनां समुत्पादयामास । करुणविमुखस्यापि विधातुः कठोरतरे क्रूरतमे वा

विधाने कोमलताया अङ्कुरोद्गमः समभूत्। दिनेशस्यापि दिनानि परिवर्तितान्यभूवन्। सोऽपि साहित्यक्षेत्रे पुष्पितः फलितश्च समभूत्।

जीर्णानि शतशश्छिद्रव्याजेन पुरन्दरविग्रहमुपहसन्ति मलिनानि वासांसि परिदधाना—

क्षामक्षामा मृदुतनुलता नन्दनोद्यानशोभा,
लोभाकृष्ट-प्रकृतिपुरुषाऽऽसक्तचक्षुर्द्विरेफा।
रेफायन्ती भुवनललनालोकलावण्य-धन्या
धन्या चामीकरवरतनुर्भाति भूषाविहीना ॥४॥

भूषालङ्कारविहीनाऽपि तस्याः नलिन्यास्तन्वी तनूर्न जहाति स्वकीयां स्वर्णवर्णामाभाम्। भृश कृशतरमपि शरीर न मुञ्चति स्म कोमलताम्।

"शृङ्गारसज्जाविधुर तदास्यं
भ्राजिष्णुरेजे विधुरङ्कहीनः।
क्षीराब्धिजातत्वविकासनोत्को
मन्ये सुधांशुः स्फुरतीति भूमौ ॥५॥

किन्तु नासीत्तस्या साहसस्य शुभाशाया वा त्रुटिः। त्रिदिवसीयोपवासेऽपि जाते नैवाभवत् तस्याः धैर्यस्य ह्यक्षुण्णायाश्च शान्तेः साम्राज्ये क्षणिकाऽपि लवमात्राऽपि क्षतिः। यद्यपि सा धैर्यस्यासीत् अद्वितीया प्रतिकृतिः, सहनशक्तिर्वा साक्षान्मूर्तिमयी, तथापि निरीहमुग्धस्य दुग्धैकमात्रपोषणस्य ह्यनुपलब्धपारणाविधेः विधेरकरुणविधानमिव शिशोः करुणक्रन्दन निकन्दन वा सुलभशान्तेः श्राव श्राव समपासरत्तदीया हृदयस्थिरता, समभवच्च सहसा तद्धैर्यच्युतिः। जातश्च शान्तिसाम्राज्यप्रान्ते नितान्तो विप्लवः। अतएव सा विवशा सती, 'न भजेत् कुतश्चन गृहविवादज्वाला प्रचण्डरूपतामिति शोच शोच निजनयनपन्थानमाश्रित्याश्रुधाराऽऽसारव्याजेन निःसारयन्ती स्वान्तःसन्तापसन्तान;

शमयति स्म क्वचन निजोद्वेगसमुद्रेकम्। क्षुधाक्षुब्धनवजातशिशोः करुणक्रन्दनमसह्यमाना स्वयमपि कदाचिदक्रन्दत्। भे, सम्प्रति तु सूर्योदयोऽपि जातः। कार्यं कर्तु यामि क्षेत्र। अस्ति तत्रेतस्ततो विस्तृत भूरिकार्यमवशिष्ट, तद् गत्वा सम्पादयामि तावत् अतः शीघ्र प्रातरशनमादायं दीयताम्। इति।

प्रायः सर्वाण्येव परिधानीयानि वस्त्राणि तु सहस्राक्षमप्युपहसन्ति स्म। तदीया देहावगूहनभित्तिरूपा शाटीमासाद्य चपलः श्वसनोऽपि तत्रत्यरन्ध्रनिचयव्याजेन तत्स्वागतार्थमिव समुन्मीलित द्वारसहस्रमिव मन्वानो नि शङ्क कलयतिस्म स्वच्छन्द स्वकीययातायातम्।

**"धूर्तः प्रकाशविटराज इह प्रवृत्तो,**
**व्यालोलनेत्रशतविस्फुरणेन साकम्।**
**तल्लोकलोचनविमोहनगात्रलक्ष्मीं**
**व्यालोकितुं विवरगो भृशमीक्षितेऽङ्गम्॥६॥**

**अभ्यन्तरे लघुगृहे सततं वसन्तो,**
**जीर्णच्छदौ स्फुटितभित्तिमये विषण्णा**
**रूपानुरूपपरिधेयविधेयहीना**
**दीना दिनं बहुरुपैतुमसौ न सेहे। [सत्का]॥७॥**

हन्त, समुचितवेषभूषापरिवञ्चिता लोक - लोचनलक्ष्यलज्जया ह्यनुन्नतमस्तका भूमौ विवरमिवान्विष्यमाणा, गलितगर्वस्वाभिमानमौक्तिकमालिकेव तान्येवावचेतुमेव सा सामान्ययातायातेऽपि नतकन्धरा नाशक्नोत् लज्जावगुण्ठितमुखी सुमुखी मुखमुन्नमितुम्। यद्येकाकिन्यास्तस्याः कृते एव चिन्ताऽभवेत् तर्ह्यपि सा सोढु प्रभुरभवत् किन्त्वनवबोध मुग्ध दुग्धैकमात्रनिर्भरजीवन नवजातशिशु तथा क्षुधाव्याकुल मुक्तकण्ठ रोदनरत, अलब्धपयःपान कथ समाश्वासयेत् सा निरस्तपयःपयोधरा विहितनयनपयोधरा वराकी। सकृदपि यदि कार्यमेतादृशमापतेत्, तदपि सा कथञ्चित् परिसाधयेत् परन्त्वेषा दैनन्दिन्यैव प्रक्रिया, प्रति-

दिनमेव कथं कं वा समुपायं सञ्चिन्तयेत्। द्वित्रिवारं तथाऽऽचरितेऽपि तया, न सुचिरकालं तमुपायं संस्थापयितुं रक्षितुं वा सा समर्थाऽभूत्। निरन्तरमेव प्रत्येकवस्तुनः कृते परमुखापेक्षणं, अनुपलब्धौ चिन्तोद्वेगः तदभावे च नित्यनैमित्तिककार्यकलापस्य व्याघातः, तेन च जीवननिर्वाहोऽपि दुराराध्यः, कथं सा कया वा रीत्या, केन वा विधिना स्वात्मनः, शिशोः, तत्पितुः (स्वस्वामिनश्च) पारितोऽधुना स्यात्पारणाविधिः। ततोऽपि मुग्धबालकस्य करुणाक्रन्दनं कथं प्रशान्तं क्रियेत। यदि कस्मैचन वस्तुने बालरोदनं भवेत् तदपि किमप्यन्यद् वस्तु दत्वा तस्य मनोव्यामोहनं विधीयेत, किन्त्वेतत्तु क्षुन्निवृत्त्युपायचिन्तनम्, विना स्तन्यपानेन, न तद्रोदनं शान्तं भवितुं शक्यम्। तदेव च दुःसाध्यम्, स्वपयोधरयोस्तु तस्याभावः, अन्यतो लब्धिरपि प्रत्यहं दुष्करा, तर्हि कथं तं बालकं केवलं बाल्योपचारेण लालयेत् कथं वा तदुदरपोषणं कुर्यात्। इत्थं विचिन्तयन्ती साऽपि विमुक्तधैर्या सोच्चस्वरं रुदितुमारेभे। अविच्छिन्नं रोदनप्रवाहं विधृतवति बालकेऽनेका होराः जाताः, नलिन्यपि सर्वथा तं समाश्वासयन्ती तद्रोदनं प्रशमयितुं सततयतमानाऽपि यदा न सफलतामवाप यदा च सा विकलतामवाप्य समुन्मत्तेवाऽभवत्, तदा सहजकरुणामयी सकलदीनसाधनविहीनलोकशोकापनोदनपटीयसी महीयसी निद्रादेवी सद्यः सदयमागत्य सबालां तां बालां (नलिनीम्) स्वाङ्के निधाय स्वानन्ददोलाहेलासौख्यमातन्वती स्वरसमग्नामकरोत् शीतलधीरसमीरश्च मृदुस्पर्शेन पृष्ठास्फालनपुरःसरं तामस्वापयत्।

अद्य यदा नलिन्याः अश्रूणि अवरुद्धान्यपि नावारुध्न् तदा दिनेशस्य वज्रसमानं कठोरमपि हृदयं द्रवीभूतमभवत्। सः स्वप्रियतमायाः समीपमागत्य, स्वहस्तं तस्याः शिरसि परामृशन्, अपरेण च करेण तस्या ह्यश्रूणि प्रामृजन् मधुरमधुरैर्वचनैस्तां परिसान्त्वयामास। यदा च नलिनी स्वस्था समभवत् धैर्यपथमुपागता, तदा दिनेशः एकान्तमाश्रित्य किंकर्तव्यविमूढ इव न जाने किं किं व्यचिन्तयत्।

यथा ह्यपारजलराशेः महासागरस्य मध्यात् समुत्थिताः अनन्तानन्तास्तरङ्गमालाः एकस्या उपरि ह्यपरा समुत्थिताः साटोप शब्दायमाना अनवरतवेगेन प्रवर्धमाना तटाऽऽधात कलयन्त्यः पुनः प्रतिनिवृताः न जाने कुत्र गत्वा विश्रान्तिमयन्ते। क्व वा निलीना भवन्ति, तथैव दिनेशस्य हृदयसागरोऽपि भावाकुलितः समभवत्। अद्य सः केनाऽपि सह न सलपते न वा किमपि लिखत्येव, न च किमपि पठति, केवल तन्मुखाकृतिदर्शनेनानुमीयते यत् स कस्यामपि सुदीर्घचिन्ताया मग्न- स्थितः कामप्यपूर्वां मानसिकी सृष्टिमिव कलयतीति अत एव स्वचिबुक स्वाङ्गुष्ठतर्जनीभ्या धृत्वा, समीपे च लेखनसामग्री सयोज्य दत्तैकलक्ष्यदृष्टिः न जाने कस्मिन् वयनोद्वयनव्यापारे–तन्तुप्रसारणाकुञ्चनक्रियाकलापे वा व्यस्त इवाऽऽस्ते। अय स्वात्मनो जटिलसमस्यामपि सम्प्रति न समदधात् तदानीमेव सहसा काचनैका द्विचक्री ( वायुशकलशकटी ) तामेव दिशमायान्ती दृष्टिपथमागता यत्र दिनेशः स्वविचारवाटिकाया निलीनो विनोदमातनुते स्म। क्षणाभ्यन्तरे एव सकले विश्वे परिवर्तनमिवालोकितम्। दिनेशस्यापि स्थितिः सकृदेव परिवर्तिताऽभूत्। दिवसाः परिवर्तिता इव दृष्टिगोचरा अभवन्।

द्विचक्रीवाहकः सहसोपसृत्य स्वमौलिं नमयित्वा प्रणाम कुर्वन् प्रोवाच भगवन्, इद तडित्पत्रम् ( तार ) इदञ्चैक द्रव्यादेशपत्रगर्भित पत्रपुटकम् ( बीमा ) दलेऽस्मिन् हस्ताक्षराणि समुट्टङ्कयन्तु श्रीमन्त, दिनेशो यावद्धस्ताक्षराणि विदधाति तावत् "ललन्तिका" ( दिनेशस्य ज्येष्ठा बालिका ) मन्द सुगुप्तमेव, तत् पत्रपुटक गृहीत्वाऽभ्यन्तरमधावत्। स्वजनन्याः ( नलिन्याः ) हस्तेऽर्पयन्ती प्रावोचत्–अम्ब! अस्मिन् पत्रपुटके मातुलेन मिष्ठान्न विविधविधं प्रेषित, तातचरणास्तु तेन पत्रवाहकेन सह समालाप कलयन्ति। अम्ब! सत्वर एतत् पत्रपुटक विदीर्य, अभ्यन्तरान्निष्काश्य प्रयच्छ मह्य स्वमनोऽभिलषितानि मिष्टान्नानि। सद्यः समुद्घाटय""; निष्काशयाम्ब! सद्यो वितर!! अम्ब! अहम् स्वानुजाय सरोजायापि दास्ये, सम्प्रति प्रसुप्त तमवबोध-

यामीति कथयन्ती सा ( ललन्तिका ) स्वमातरमभि समुपसृत्य मातृहस्तात् तत् पत्रपुटकमाच्छिद्य, तस्मिन् सलग्ना रक्तालक्तकजतुमुद्रास्त्रोटयित्वा तस्यैकतः कोरा विदारयितुमारभत् । सहजबालचापल्येन सद्यः स्वकर तस्मिन् ( पत्रपुटके ) निःक्षिप्य सर्वकारकोषमुद्राङ्कचिह्नितानि द्रव्यादेशपत्राणि, बहिर्निष्काश्य नलिन्याः हस्ते रक्षन्ती प्राह–जननि ! मातुलः कीदृशमीदृशमिष्ठान्न प्रैषयत् ! किं स्वरूपोऽस्याकारः ! किमेतदम्ब ! इत्थ नानाविधान् प्रश्नान् विदधती ललन्तिका मुग्धा बालिका किमपि समुचितमुत्तर, समुपस्थाप्य तन्मनःसमाधान अकृत्वैव तानि राजमुद्रारञ्जितानि द्रव्यादेशपत्राणि ( नोट ) वीक्ष्य प्रमुदिता विकसितनयना नलिनी विस्मयस्तिमितलोचना, अवितर्कितलाभहृष्टमनोव्यापारा ह्यपारानन्दान्दोलितभावा, भावाब्धिमग्नेव वाचा किमपि नोवाच, किन्तु तस्याः वदनसरोजे स्मितविकसितप्रसादलेखा सद्यः प्रकटिताऽभवत् । नयनेन्दीवरे च विकसितेऽभवताम् रसना च हर्षोल्लसितरसा प्रस्फुरदस्पष्टवर्णविन्यासा प्रावर्तत । सस्नेह ललन्तिकामालिङ्ग्य श्रवणमधुरमुवाच— प्रमते ! कुत इद पत्रपुटकमानीतवती, मुग्धे ! नेद मिष्ठान्न किलाटिकागुच्छक वा । एहि समानय मत्समीप वत्से ! एतानि तु राजकीयकोषमुद्रोट्टङ्कितानि द्रव्यादेशपत्राणि (नोट) ! देहि, तातचरणाः त्वा प्रति क्रुद्धा भविष्यन्ति । आनय वत्से, एतानि तु मह्य प्रयच्छ, त्वञ्च गत्वा पितृचरणान् शीघ्रमत्रानय । हस्त गृहीत्वा तैः सहागच्छ न जाने मुद्रापत्राणि कुतः समायातानि ।

ललतिकायाः प्रसन्नतायाः सीमाऽपि नासीत्तदानीम् । सा सद्यो धावन्ती स्वपितृचरणानानेतु दत्तैकलक्ष्या नापश्यत्सन्मुखायान्त समीपस्थमपि कमपि जनम् । सन्मुखागतः तस्याः जनकोऽपि न तस्याः दृष्टिगतोऽभूत् । समायान्ती ता बालिका विलोक्य तस्याः पिता दिनेशबाबू-स्वयमपि तत्पत्रपुटकमानेतु तदुन्मुख प्रातिष्ठत् । द्वाराभ्यन्तरे एव सा प्रविशता स्वजनकेन सङ्घट्टिताऽभूत् । धावन्त्याः तस्याः हर्षविस्मृतान्यव्यापारायाः मुखं यदा

कस्यचन धौतवस्त्रेणावगुण्ठितमभूत् यदा च कस्यचन हस्तौ स्वपृष्ठोपरि निहितौ यदा च तां कश्चन हस्ताभ्यां समुत्थाप्य स्वाङ्केऽधारयत्, प्रोक्तवांश्च–पश्य-वत्से ! कथमेवं समुन्मत्तेव प्रधावसीति–तदा सा सहसा स्वात्मानं सम्भालयित्वा प्रबुद्धा प्रतिबोधिताऽभवत् यत् सा यमानेतुं प्रकाममधावत् स एव तस्या जनकः समीपमुपस्थितो बोधयति तां स्वाङ्के निधत्ता ! वत्से कथमेवं व्यग्रासि, अधुना तु निपतितैव भवेः। क्वास्ति तत् पत्रपुटकम् ?।

दिनेशोऽधुना स्वप्रश्नान् समाप्तानमपि नाकरोत्–ललन्तिकाऽपि तत्प्रश्नोत्तरं न प्रायच्छत् - मध्ये एव नलिनी किञ्चित् किञ्चित्प्रहसन्तीः किञ्चित् विलज्जमाना मन्दं मन्दं समुपसृत्य शनैः शनैरपृच्छत्–एतानि द्रव्यादेशपत्राणि कीदृशानि सन्ति ! तडित्पत्रञ्च कुत आयातम् ? इमानि च कोऽत्र समानीतवान् कस्य वा निधिभूतानि ?

दिनेशः सस्मितम् सरसनयनं सोल्लासमवदत्–प्रियतमे ! इमानि ते करुणक्रन्दनपरिपक्वफलानि सन्ति। क्रूरतरस्यापि विधातुः कठिनतमहृदयमपि ते करुणक्रन्दनपरितापसन्तप्तमिवाधुना द्रवीभूतमभवत्-स एवाऽद्य त्वया सह स्वसहानुभूतिं प्रादर्शयत्। ध्रुवमेतत्सत्यं यत्—

**सर्वात्मना यत्नशतानि कृत्वा, ध्वस्तोद्यमः साधनहीनदीनः।**
**विपद्घनध्वान्तविलुप्तदृष्टिर्भक्तो भवेच्चेद्दयते विधाता॥**

यदा हि भक्तो जनः सर्वथासाधनविहीनः सन् करुणक्रन्दनं करोति, यदा च तस्यान्तरात्मा मुक्तकण्ठो रोदिति तदा कठोरहृदयोऽपि विधाता स्वयमेव द्रुतहृदयो भवति सद्य एव च करुणां कुरुतेऽपहरति वा तस्यापत्सतापपापसन्तानम्। निःसाधजनप्रियो हि गो-गोप-गोपीजनप्रियः सपदि दयते सद्यः प्रकटीभूय तं धारयति स्वाङ्के। स एवाद्य दयालुरभूत् सम्पत्तिसाधनविहीनां दीनां त्वामलोक्य दयापरवशो निवारयितुं ते दारिद्र्यसङ्कटं, प्रेषितवान् लौकिकीरिमाः मुद्राः। प्रिये ! विद्यतेऽयं पुरस्कारः यो हि

त्वल्लिखिते "विपदि धैर्यमेव जीवन पुसाम्" नामके लेखे वितरितः (समित्या त्वल्लेखोपरि घोषितोऽस्य पुरस्कार' सम्प्रति समायातः) तत्सूचकमेवैतत् तडित्तन्त्रीपत्रम् अपर चैतन्नियुक्तिपत्रम् येन भवत्याः पतिरपि युवराजस्याभिभावकरूपेण तत्संरक्षको नियोजितः, युवराजेन सह प्रदेशं गन्तुमपि समादृतः, वेतनादिकं पर्याप्तमेव दीयमान, सर्वविधा चान्या भोजनादिसुविधाऽपि प्रदातुमुल्लेखः कृतः। कथय काऽत्र भवत्या ह्यनुमतिः, प्रेषयिष्यसि स्वस्वामिनम् ?

लज्जावनतमुखी सुमुखी सा नलिनी किमप्युत्तर न दत्वा स्वात्मन्येव न जाने का का नवीना कल्पना कलयन्त्यतिष्ठत्, नवनवामेव सौभाग्यसृष्टिं सृजन्त्यास्ते स्म। न निरसरत् तस्याः मुखादेकमप्यक्षर, केवल तदीयेऽस्मिन् मुखमण्डले प्रसादरेखा सविशेषा विलोकते स्म। विविधाश्च कल्पनातीता अतीताऽनागता वा भाविजीवनविधायका सर्वदाऽभ्युदयोन्नायका प्रदर्शितभावा भावाः अहमहमिकया समागत्य वदनमञ्चोपरि नवनवनर्तनमभिनवाभिनयञ्च कलयन्तिस्म, तदानीमशेषा तदीया तनुरपि तनुलता सहसैव समभूत् प्रफुल्ला नन्दनोद्यानमण्डना, जाता च स्वयमपि मधुमासलक्ष्मीरिवापरा, सा दिनेशस्य गृहलक्ष्मीः (नलिनी)।

× × ×

समाचारपत्रेषु सम्प्राप्त कवितायाः कथायाश्च विशेषतः प्रकारः समन्तात् प्रस्फुरति, यत्र यत्रैव दृष्टि प्रक्षिप्यते तत्र तत्रैव कवितानां कथानाञ्च कृते प्रकाशनार्थमाकाक्षा, दिदृक्षा, पिपठिषा विलोक्यते षाण्मासिक - त्रैमासिक - मासिक - पाक्षिकादिपत्रिकाणा तु का वा, दैनिकपत्रेष्वपि भूयान् प्रचारः प्रसारश्च विलोक्यते, पठ्यते च पत्रेषु सम्पादकाभिलषितानि कविता - कथाविषयिणी सर्वदाऽऽकाक्षा ह्यावश्यकता वेति।

नाधुनास्ति किमपि स्थानं साहित्यक्षेत्रे यत्र दिनेशस्य कविता लेख-कथामयः प्रकाशो न प्रस्फुरेत्, नो वा तत्प्रदेशं ज्योतिर्मयं न कुर्यात्। सम्प्रति क्षणमात्रमपि समयं शान्त्या स्थातुं न प्राप्नोति। कदाचिद् राजसभायां कदाचन जनसंसदि कदाचिच्च कविसम्मेलने कदाचन साहित्यगोष्ठ्यां कदाचिच्च पत्रकारसम्मेलने, क्वचन कथाप्रतियोगितायां, कदाचन युवराजस्य परिभ्रमणावसरे तद्रक्षणपर्य्यवेक्षणे, कदाचिन् महाराजस्य साहित्यसङ्गीतसमुपक्रमसमाजे, भागं सहयोगं समासेवनं परिवहन्न लभते क्षणैकमात्रमपि विश्रामम्। यथा कथञ्चित् मिलत्यपि कदाचन समयः तदानीं व्यस्ततामयति-स नलिन्याः प्रणयबन्धेन, सहसा ततोऽवकाशमवाप्य शान्तो भवति, तत्क्षणमेव ललन्तिका ( तत्तनया ) सरोजः (तत्पुत्र ) सहसा समागत्य कञ्चन तस्याङ्कमारुह्य तं स्नेहवशं करोति तु ह्यपरो तस्य कण्ठे स्वभुजपाशं निक्षिप्य तेन सह सरसालापं बालोचितमनाद्यन्तोपक्रमं निरुपमं निरुद्देश्यञ्च वितनोति। सोऽपि तथैव ताभ्यां सह स्वात्मानपि बालभावनिपतितं विधाय स्वबाल्यकालिकीं सौख्यसन्ततिमनुभवति। ततो निवृत्तो यदा भवति सद्यः तद्बालमित्रं रजनीशः समायाति तेन सह न जाने का का कल्पना नव-नवा वा योजना वितनोति।

सम्प्रति नलिन्या अपि हस्तौ नाधुना क्षणार्थमपि आर्द्रभावं विजहीतः सर्वदैक भृङ्गारकजलाभिषेकाल्लब्धस्नपनभावौ वरुणोपासकावेव प्रतीयेते स्म। साऽपि निरन्तरमेव कार्यभारवहनरता तिष्ठति स्म। एकस्मात्कार्यान्निवृत्ता यदाऽभवत् तदानीमेवान्यकार्यं दृष्टिगतं भवति स्म।

अधुनैव सर्वान् भोजयित्वा स्वयञ्च भुक्त्वा निवृत्ता सवृत्ता। सद्य एव ललन्तिका समागत्यावदत्—

अम्ब दुग्धौदनं देहि, भृशं मां बाधते क्षुधा।
ॐ, ॐ किलाटिका मह्यं प्रयच्छेति दयामयि ॥१॥

नलिनी—सप्रणयकोपम्-अधुनैव तु भुक्त्वा गतासि ? किमर्थं व्यर्थं वारं वारं परिश्रामयसि ?

ललन्तिका— त्वमेव माता सततं दयालु-
स्त्वं स्नेहभूमिर्जननी प्रियाणाम्।
धात्री सुखानां प्रणयप्रमात्री,
पात्री रसानामशनप्रदात्री ॥१०॥

नलिनी— मिष्ठान्नकामा चपलेऽधुनासि
जानामि ते स्तोत्रपदक्रमालिम्।
भुक्त्वोत्थितायां त्वयि नाधिकोऽभूत्
कालः कथं कामयसे ? ललन्ति ॥११॥

ललन्तिका— न ह्यम्ब ! सत्यं प्रवदामि भूयः
प्रबाधते मां मुदरस्थिता क्षुत्।
मिष्टान्नलिप्सा, न हि चाटुकारं
कुर्वे परोक्षस्व, गतिं मदीयाम् ॥१२॥

नलिनी सस्नेह समालिङ्ग्य तनया प्रायच्छत् तस्यै मधुरमशनम्। वचनचपलतायास्तस्याः सरसालापान् श्रुत्वा सहजबालचापलेन सह तदीया, मिष्टान्नयाचनप्रणाली दृष्ट्वा—

"प्रीत्युत्फुल्लविलोचना नवरसादप्युत्तमो यो रस-
स्तं प्रत्यक्षमुदीक्षतेऽद्य नलिनी वात्सल्यमुल्लासिनि।
सौभाग्यं मनुते क्षणं निजसुते स्वाङ्कं सरोजे गते
स्नेहालिङ्गनपूर्विकां कलपदामाकर्ण्य धन्या गिरम् ॥१३॥

यदा च सरोजः बहिः क्रीडन् धूलिधूसरितसर्वाङ्गः सहसोपसृत्य नलिन्याः अङ्कमारुह्य अस्फुटाक्षरैः कलपदैः विगलितप्रसङ्गैः वचन-विन्यासैः स्वजनन्याः हृदय स्पृशन् मन्दं ऊँ, ऊँ, ऊँ, कुर्वन् किमप्य-याचत तदा नलिनी पित्तलसम्पुटात्-स्वल्प मिष्ठान्न, तत्र कुण्डलिनीं

युगल किमन्यद्वा लघुस्थाल्या निक्षिप्य तस्मै ददाति स्म । बालोऽपि स्वभगिन्या स्थाली प्रति दृक्कोणभागेन तिर्यक् विलोकयन्- यत् मत्तोऽधिकं किं किं वस्तुजात ललन्तिका भक्षतीति-शनै शनै प्राङ्गण प्रत्यगच्छत् । नलिनी च तस्य तादृशी ता चेष्टामालोक्य स्वात्मनि प्रसन्नतायाः सीमानमपि नावेक्षते । इत्थ स्वात्मजानुरञ्जनात् क्षणमेव विश्राम लब्धवती नलिनी - स्वपृष्ठमेरु सरलीकर्तु स्वविष्टरोपरि पदमेवादधात्-तस्मिन्नेव क्षणे तस्याः प्रतिवेशिनी समागत्य ता न्यवेदयत्-यदद्य मद्गृहे प्राघुणिकाः समागताः, कि कुर्याम् बालकस्य विपिनस्य पिता तु प्रदेशमेव श्रयते, मत्सविधे च नाऽधुना किमपि, तेषा सत्कारो येन विधीयेत । साम्प्रतिकी मे स्थितिस्त्वेतादृश्येव जाता यत्-'नाम महत्, दर्शनाऽभावः' प्रदेश प्रति प्रस्थितस्यापि पण्डितपुङ्वस्यास्ति परित प्रसृता प्रवला प्रतिष्ठा, प्रकामश्च पाण्डित्यप्रभावः, प्रवर्तितश्च प्रतिभायाः प्रसारः । पर्याप्तो वा परिचार, सर्वमेव सम्मानसमुल्लासि साधनसमुदय समुदीक्ष्य सर्वे एव सम्बन्धसम्बन्धनाय समायान्ति स्वस्वसुतासुतादि-सम्बन्धोत्सवसमुत्सुकाः । समेषामेषा समाधानाय स्वल्पमात्रमपि सन्तोषायास्ति चेत् किमपि दानीय, "घृत, शर्करा तण्डुलान सूप स्वल्पतमञ्च गोधूमचूर्णमपि प्रदायानुगृह्णातु भवतीति । ततो भोजनानन्तर तेभ्यः भविष्यति च तिलकार्थमावश्यक, प्रतिजन श्रीफलमेक रजतमुद्रा चैका । नाधुनाधिका समपेक्ष्यते, केवल तु ममाप्यस्ति गृहे चत्वारि त्वितो नेष्यामि । किमत्र कथयामि, भवतीमेव सर्वदा कष्टदानार्थमागच्छामि । वधूराज्ञि । भवती परमदयालुरस्ति, अतः सर्व एव जनस्ते द्वार समाश्रयते नान्यथा कः कस्मै ददाति । अहन्तु सर्वदैव ते सदयोदार्यप्रशसा कुर्वती कामये ते सततसौभाग्यसमृद्धये ।

नलिनी,—तर्हि किमर्थमेतेऽद्य समायाताः, किमु कामयन्ते ?

प्रतिवेशिनी—देवि ! गिरीशेन सह स्वकन्यायाः सम्बन्ध स्थिरीकर्तुं, गृहद्वारं परिस्थितिं वा निरीक्षितुमेव । वधूराज्ञि । वर्षद्वयानन्तर त्वयमपि

बालक. भवत्याश्चरणरजःप्रसादमासाद्य एम० ए० परीक्षामुत्तीर्णः राजसेवाया, अन्यत्र वा किमपि कर्तुं समर्थो भविष्यति तदा तु सः स्वयमपि सर्वं व्यवहार साधयिष्यति न तदानी तत्पितुः, साहाय्यस्यप्यावश्यकता भविष्यति। सम्प्रति तु भवत्याः करुणा एवैकमात्रमवलम्बनम्।

नलिनी -- मैव, आर्ये। भगवान् परमदयालुः स एव सर्वेषा पारणं पालन पोषण सरक्षणञ्च कुरुते। गृहाण यथोप्सित वस्तुजातम्। इमाः पञ्चमुद्रा अपि।

प्रतिवेशिनी शुभाशीर्वचनपुरःसर सकलमिष्ट मिष्ट वस्तुजातमादाय पञ्चमुद्रा अपि गृहीत्वा स्वगृह गता। नलिनी तत्कार्य सम्पन्न कृत्वा पुनः शयनकक्षमुपागता। पञ्चपलात्मकोऽपि कालो न पूर्णतया समाप्तोऽभवत् सहसैव द्वारदेशावलग्ना घण्टिका—"ट्रुन ट्रुन" शब्दमकरोत्ः नलिनी सद्यः समुत्थाय द्वारप्रदेशमागत्य पश्यति तदा, दिनेशबाबू-विद्यते किमु ? इति पृच्छन्तः पञ्च पुरुषाः दृष्टिपथमुपागताः। नलिनी तेष्वेकतमं परिचिनोति स्म, यो हि सर्वदा दिनेशस्य मनोविनोद सफलीकर्तुं सहायको भवति स्म।

नलिनी—आगम्यताम्-पद धार्य्यताम् उपविश्यताम्। तेऽप्यत्रैव राजन्ते, अधुनैवायास्यन्ति।

रजनीशः—एतेऽपि मम वयस्याः सन्ति। दिनेशमहोदयेन सह समालाप, सरसकाव्यनिषेवणाय कविता श्रोतुमुपागताः। बहोः कालाद्दर्शनेप्सव आसन्।

"स्थाने स्थाने परिषदि सतां मञ्जुकाव्यानुलापान्-
श्रावं श्रावं श्रवणविवरान् पूरयन्तः सुधाभिः।
साक्षाद् द्रष्टुं सरसरचनाकारिणं श्रीदिनेशं
मामाश्रित्यास्पदमुपगताश्चायपेयं च पातुम् ॥१४॥

नलिनी—धन्य तर्हि भाग्यधेयमास्माकीनम्, विश्रम्यतामिह, सम्पादयामि तावत् चायपेयव्यवस्थाम् ॥

तदानीमेव—मरुत्त्वरशकटी द्वारदेशमासाद्य विश्राममिवाकलयितु गतिमुत्ससर्ज। दिनेश सद्यो बहिरागत्य स्वा चित्रशाला प्रवेष्टुकामो यथा हि द्वारमुपसेवते—सम्मुखे समुपस्थितान् विलोकते च कतिपयनवप्राघुणिकान्। प्रविश्य चाभ्यन्तरमुत्फुल्लदृश· तस्य महोत्सव इवाभवत् परस्परप्रणयदृशा दृशा सम्मेल्लनेन। नलिनी च सद्य एव महानसे प्रविश्य तेषा सम्मानार्थं चायपेय तथा चर्वणार्थंञ्च ससैंधव विविधवस्तुजात, द्विविधञ्च मिष्टान्न पृथक् पृथक् पात्रे निधाय चायपेय ससाध्य तत्रैव पुन· समागता यत्र सर्वे परस्परालापमुपासते स्म।

मिलित्वा च सर्वे परस्पर हसन्तो हासयन्तश्च सैन्धवमयं चर्वण मिष्टान्नञ्चोपभुज्य पीत्वाऽथ चायपेयम्, मोदमाना नलिनीसनाथाः प्रारम्भन्त सरसान् काव्यालापान् रसास्वादाश्च। दिनेशोहि यदा स्वचतु-र्दिक्षु प्रसृता कवितामश्रावयत्। सरससगीतमयी कलमधुरकण्ठोदीरिताम्। तदानीतनः सकलः समाजः आनन्दमग्नः चित्रखचित इव शान्तो मुग्धश्च समभूत्। मध्ये एव रजनीशः प्रावोचत् (नलिनी लक्ष्यीकृत्य) भ्रातृजाये ! आर्ये! सम्प्रति स्वनिर्मितया सरसरचनया सर्वेषा तृषितकर्णपुटरन्ध्रान् काव्यरसापूरणेन समाप्यायताम् अतएवैते विशेषतयाऽत्र समायाताः। सम्प्रति तामेव रचना श्रावयात्रभवती या हि पुरस्कृताऽभूत्।

नलिनी तामेव कवितामश्रावयत् यस्याः उपरि पुरस्कारो लब्ध। सर्वे श्रोतारस्ततोऽपि द्विगुणतरमानन्दमनुभवन्ति स्म। तालीप्रदान पुरस्सरं नलिनी प्रशसन्तः कविता पुनः पुनरश्रृण्वन्।

प्रथमन्तु नलिनी स्वयमेव ब्रह्मणा सम्यग्विविच्य सकलसाध-नानि सकलय्यं मननपूर्वक सर्वाङ्गसुन्दरी ता निर्मातु यत्नेन सकलमनो हारिणी निर्मिता, ततोऽपि तस्याः कण्ठस्वरः कोकिलमपि लज्जित कुरुते स्म, तदुपरि तदीया स्वानुभूतभरिता हृदयग्राहिणी रचनापि ततोऽधिक-

तमजनचित्ताकर्षिणी, ललितपदावली च ततोऽपि सरसा, पुनश्च कविता-पाठक्रमोऽपि सहजसौकुमार्यनारीहृदयनि सृतो विविधहावभाव-विलसितः सौभाग्यवर्धनः प्रवर्धनश्चाधिकाधिकश्रवणस्पृहाणाम् । अतो नलिन्या प्रस्तुते सङ्गीते निजकवितागीते समुपनीते च तेषा श्रुतिपथ, समागत इवान्वभूयत सविग्रहः साक्षादानन्दः । नासीन्मनागापि सन्देहो, नलिन्याः वदने यथा सौन्दर्यमासीत् तथैव कण्ठे माधुर्यमपि ।

यथैव तेषामेषा साहित्यगोष्ठी सम्पन्नाऽभवत् तत्क्षणमेव नलिन्याः कृते महिलामण्डलस्य वार्षिकोत्सवे सभापतिपदमलङ्कर्तु निमन्त्रणपत्रेण साक प्रार्थनापत्रमुपागतम् । नलिनी ततः समुत्थाय पत्र गृहीत्वा समयोपरि समायास्यामीति स्वीकृतिपत्र प्रेषयामास ।

तदानीतनेषु पत्रेषु नलिन्या अपि साहित्यभिरुचिः, सरसरचना निर्माण, मधुरकलकण्ठेन मन्द्रगम्भीरस्वरेण तत्पाठनञ्च, तस्याः हासप्रियता च सप्रशंस सतत पठ्यतेस्म जनैः । अतः तस्मिन्नप्यवसरे तस्या सभापति-पदे विराजमानायाः भाषण, कवितापाठ च श्रोतुकामा शतशो जनाः विद्वासो विदुष्यश्च समवेता ह्यभूवन् । साऽपि तादृगमेव जनसम्मर्द कल्पयित्वा पूर्वतः एव तथाविधा सामग्री सकलय्य, सहास महर्ष सगर्व च निःसङ्कोच धीरप्रशान्तया गम्भीरया गिरा मदमत्तकोकिलकण्ठ कुण्ठित कलयन्तीवाश्रावयत्स्वकीया नवीना रचनाम् । श्रोतारः समाहूताः सहृदयाः, श्रोत्र्यश्च रससिन्धुनिमग्ना इवाभवन् । पुनः पुनस्तालीदानेन वार वार प्रेरणया च अनेकवार शृण्वन्तोऽपि न तृप्तिमुपागताः । साऽपि तान् हताशान् अकृत्वा यथेच्छमश्रावयत् । तदानीमाशातीता सफलता समवत्सम्मेलनस्य । ततश्च भूयो भूयो विविधभावनोद्गारैः सम्मानैः समर्चिता सा स्व सदन समागता ।

स्वगृहेऽपि कतिपयैर्मित्रैः सह सस्थितो दिनेशः तस्याः प्रत्यागमन प्रतीक्षमाण एवासीत् । सम्मानेन समर्पिताना कुसुमहाराणा भारेणेव नतकन्धरा सबहुमान ता स्वगृह यावत्प्रेषयितु समायाताना सम्भावित-

व्यक्तीना महिलाना मध्ये तारामण्डले रोहिणीव, शतशो गोपिकायूथे वृषभानुनन्दिनीव, सकलसुरसुन्दरीसमाजे शचीव व्यराजत सा नलिनीति। व्यदर्शि जनैः दिनेशेन तन्मित्रैश्च।

गृह प्रापय्य, प्रणाम कृत्वा विसर्जिते सकलसुन्दरीसमाजे शनैः-शनैः लज्जावनतवदना, विलसितसदना स्मितविकसितेषद्वदना, तत्रैव प्रविवेश नलिनी यत्र दिनेशस्ता प्रतीक्षमाणः सुहृद्भिः सहातिष्ठत्। सर्वे एव समुत्थाय सम्मानार्हा सम्मानिता ता सादरमभिनन्दयामासु।

नलिनी च तान् प्रणम्य तेषा सत्कारार्थ व्यवस्था विधातु सद्यो रसवती प्रति प्रचलिता। क्षणार्धेनैव सकला व्यवस्था विधाय पुनस्तत्रैव समायाता। भृत्यः शीघ्र सज्जिताः स्थालीः समानीय तेषा सम्मुखेऽस्थापयत्। नलिनी यथाक्रम सर्वान् परिवेषयामास। सर्वे नलिन्याश्चातुर्यस्य, दिनेशस्य च भाग्यवत्ताया प्रशसा व्यदधुः। इत्थ सतत, एकस्मात् कार्यात् यथा निवृता भवति तथैव सद्य एवान्यस्मिन् सलग्ना नलिनी नालभत क्षणमेकमपि यस्मिन् सा व्यस्ता न भवेत्। प्रत्यहमेव समुद्यन्त भगवन्त भास्कर प्राच्या विलोक्य प्रणाम अर्घ्यञ्च दत्वा कार्यक्षेत्रेऽवतरिता नलिनी नावैक्षत यत् भगवतो मरीचिमालिनो दैनन्दिनी सकललोकाभिवन्दिनी, जगदानन्दिनी यात्रा कदा समाप्तिमगमदिति। नित्यक्रमानुसार समयोपरि भगवान् भास्वान् नित्यक्रम समाप्यास्ताचले विश्राम समासादयतिस्म–परञ्च नलिनी ततः पूर्वमेव कर्मसाक्षिणः समागमनात् प्रागेव कर्मणि प्रवृत्तवती तद्गमनानन्तरमपि विरतप्रहरायामपि रजन्या समागतसुहृद्बन्धुवान्धवाना सत्कारसभारे सम्पृक्ता नाकामयत क्षणमपि विश्रामसौख्य, मनुते स्म च तस्मिन्नेव निजगौरव सौभाग्याभिवर्धनम्, कर्तव्यपालनोल्लसितञ्चेति। प्रसृते च समन्ततो विभावरीवैभवे, सुधाकरेण च निजकरसुधाभिषेकसितीकृतेऽथ सकलभुवनभूभागे, सकलदिनकृत्य परिसमाप्य, प्राणिभिः शान्तनिन्द्रासुख-

मनुभवितु शरणीकृते च निजनिजशयनावासे, नलिन्यपि विश्रान्ति-सुखार्थं समयं सुलभते स्म ।

साम्प्रत प्रकृतिकामिन्याः परिवर्तनशीला शृङ्गारसज्जा सहसैव परिवर्तिता समभवत् । हेमन्तशिशिराभ्या समभिभूता वनोपवनविहारिणी विविधविधा जाड्यहिमपातसमाक्रान्ता जडीभूता या प्रकृतिरासीत् नीरसाऽपि सा सरसेवाभाति स्म । हिमोपमर्दनपर्य्यर्दिता तरुततिः सतत निजशीर्णजीर्णपल्लवनिपातेन पुरा रुदन्तीवव्यलोकि जनैः साऽपि सहसा अभिनवदलसुसज्जिता समभूत् ।

यो हि जाड्यजडीकृतसर्वावयवः प्राणिसमाजः सन्ततसङ्कुचित-सर्वाङ्गः आसीत् सोऽपि सम्प्रति गतव्यथः प्रतिभाति स्म । सर्वत्र नव नव इव रूपराशिः सकलनयनानन्दमिव वितनुते स्म । पादपपटलेषु परितो मृदुलारुणा दलसन्ततिः सुशोभते स्म, नीरसेष्वपि क्षुद्रात्क्षुद्र-तमेषु क्षुपकुलेषु समुद्गताऽभवत् कुसुमकलिकोद्भूतिः । ललितलवलीनि-वहोऽपि परिमण्डितोऽभूत् नवारुणपल्लवपुष्पसम्भारैः । नद-नदी-तडाग-वापीषु च घनीभूत हिमप्रस्तरायित जलमपि सम्प्रति शैत्यमपहृत्य स्वाभाविकद्रवमयमभूत् । अनागतञ्च तस्मिन्मृदुत्व कवोष्णत्वञ्च । जलाशयमशेषमेव विविधकञ्जमालिकासमलङ्कृतमिवानन्दमयमालोक्य समनुभवन्ति मनुजाः नवीना मनसो मुदम् ।

सम्प्रति सारसलक्ष्मणाना 'क्रौ, क्रौ, इति दीर्घदीर्घतरः कण्ठरवः कठोरः कर्णकटुरिवानुभूयते स्म जनैः । नाधुना तस्मिन् सा मधुरता नवा-ह्लादिनी च सा मोहिनी शक्तिः या श्रुत्वा जनाः समाकृष्टाः भवन्ति स्म । हसानामपि तदानी मधुरतरः कलरवो न तादृशः सुखावहो भवति स्म, श्रोतॄणा मनोविनोदाय यथा यादृशो वा कलकण्ठाना काकली कलकलः कलयति स्म कल्पनातीता कान्तिमयी कामपि श्रवणानन्दस्रुति श्रवणविवरेषु समुद्गीर्णामापामरजनोन्मादिनीम् । ततोऽप्यधिकतरा मञ्जुमञ्जरीसनाथा सहकारसन्ततिः समाकर्षति स्म सकलजननिकायं,

सन्तर्पयतिस्म मधुरसुरभिपरिमलभरेण घ्राणेन्द्रियकुलम्। तदानीं विविधवनोपवनविहरणशीलः सद्यः समुद्भूतप्रभूताभूतपूर्वसुमनःसुरभि-रसवाही, सन्ततनदनदीसमुपहृतशीतलजलकणोद्वहनलब्धवैशिष्ट्यः; अविच्छिन्नगतिमान् निरन्तरपरिमलजलकणोद्वहनभारपरिश्रान्त इव मन्दगतिकः प्रकृतिगभीरो धीरः समीरोऽपि सर्वदा सुखयति स्म सकल-जीवनिकायम्। प्रावर्तयत्ञ्च समागतसुरभिसमयस्य विजयोल्लासघोषणां स्व-स्वविरावैर्वयसाङ्गणो भुवनतले। समारब्धाभूत् पुंस्कोकिलाना रसा-लतरुशाखासु सरसा हेला शाखातः शाखासु वा कूर्दनकेलि। कुहू कुहू ..." सङ्गीतेन सर्वत्र वसन्तागमन सूचना वा प्रासारयत् कोकिलकदम्बः। अयं हि "कु हू" शब्दः सकृदुच्चरित एव सकलप्राणिषु सञ्चारयन्नवीनमेव जीवन ज्योतिः। प्रासरच्च सर्वत्र हर्षोद्गारो जड़चेतनेषु। क्लीवत्वेन परि-क्लृप्तानि परिगणितानि वा वनोपवनानि हि नवनवोद्भूत सुमनःसम्पत्त्या प्रदर्शितपुंस्त्वपरिचयानि तु विविधारभिवधकुसुमकोरकदोहदैः सर्वदा प्रफु-ल्लितानि न विभान्ति स्म भुवनतले। तत्र रसालस्तु रसालय इव मदमत्त इव विघूर्णयन्निवास्त। किं बहुना आकाशे चन्द्रः, जले कमलिनी, स्थले स्थलपद्मिनी ( पाटला तरुणी वा ) दिनेशस्य च गृहे सम्प्रति नलिनी; भृश परमानन्दसन्दोहसम्भृता, आनन्ददोलान्दोलितेव हर्षप्रकर्षदर्शितोद्गारा ह्यपारानन्दतरङ्गिणीव केलिकल्लोललुलिताऽऽसीत्।

आसीच्च निशीथिन्याः पश्चिमप्रहरः प्रभृतञ्च सर्वत्र शान्तेः साम्राज्यम्। यदा कदा बालाना, इतस्ततः पादप्रक्षेपणक्रियाजनितः शब्दः क्वचित् क्वचित् श्रुतिगपथगत इवासीत्। कदाचन मृण्मयभृङ्गारकमुखो-पमुखान्निपतितस्य जलस्य "छल-छल" मयः पात्रसम्भरणशब्दो वाऽश्रूयत। शनैः शनैः सकलगगनप्रसृतोऽन्धकारः समपसृत इव प्रतीयते स्म। प्राणिसमुदाये-सकलनिशीथिनी परिलसितः सुदृढाऽऽलस्य भुजबन्ध सम्प्रति शिथिलीभवन्नन्वभूयत। विलोचनपटलेभ्यः पराधीनता ( निद्राजन्य ) अङ्गेभ्यश्च शयनशैथिल्यम् सद्योदूरमपसृतमिव दृश्यते स्म। मन्द मन्दञ्च

शीतल शान्तः सुरभि समीरः "सर-सर" - शब्द वितन्वन् प्रावहत् । क्षुपाः लता पादपाश्च मदमत्ता इवान्दोलिता आसन् शनैं शनैं घूर्णयन्त इवादृश्यन्त । कुसुमकोरकाः स्मितमिवाकलयन्ति स्म । सुमनासि प्रहसन्ति स्म । मानवहृदयेषु सुचिरप्रसुप्ता अपि भावना सहसा जागरिता इवाभूवन् । यद्यप्येतादृश प्रभातमनेकवारमायात गतञ्च । प्रायो वसन्तः, ग्रीष्मः, प्रावृड्, शरद्, हेमन्तः शिशिरश्चापि प्रतिवर्षभागता गताश्च किन्त्वेषा हर्षोन्मादिनी नवीनावेला तु काचनापूर्वेव प्रतिभाति स्म ।

इदानीमपि दिनेश सुखेन शान्तिमयी निद्रादेवी समुपासमानः पयफेननिभप्रच्छदपटपरिच्छन्ना मृदुलतूलगर्भितस्थूलविष्टरा रजतमयखट्वाङ्गपरिशोभिता शय्यामधिशयानः सुखस्वप्नानि वा समीक्षमाणो मध्ये मध्ये च प्रबुद्धोऽपि विविधपूर्वापरवर्तमाना परिस्थितिं विचिन्तयन्नातिदूरात्समायातामस्पष्टवर्णां स्वानुभूतघटनाचक्रसवर्णां काञ्चन गीतिं अर्द्धोन्मीलितचक्षु शुश्राव । प्राभातिकशीतलमन्दसुरभिसमीरणासेवनमदमत्त इव इतस्ततः ह्यनियमितप्रक्षिप्तपादयुगलः मुहुर्मुहुर्जृम्भमाणविवृताननगह्वरो मानवसमाजः, स्वमुखात् भगवत्स्तवनमिव किमपि किमपि

"मन्दं मन्दमुदीरयन् मुहुरहोऽस्पष्टां विशिष्टां कृतिं,
वेदव्यासशुकोक्तिसाररससामुल्लासिनीं चेतसः ।
प्रातः संस्मरणोपयुक्तभगवल्लीलारसश्राविणीं
ध्यायंस्तच्चरणारविन्दमकरन्दास्वादसिद्धो जन ॥१५॥

स्वे स्वे कर्मण्यविरतरतः संश्रिते पूर्वजातैः
सम्पूर्णं तत्कलयितुमहो ह्यर्द्धसिद्धोज्झितं यत् ।
कामं कर्म प्रकृतिविहितं साधयत्येष नैजं
यातायातैः कतिपयजनाः कुर्वते देहकर्म ॥१६॥

प्रहसन्तीवोष कुमारी निजदेहप्रभोद्भासितभुवनवलया—

हस्तं हस्तेन हि भुजमहो बाहुना वेल्लयन्ती
बारं बारं घनकुचयुगश्लेषविश्लेषरम्या ।

सालस्यं वा वलयिततनूरङ्गुलीरङ्गुलीभि-
र्मोट्टायन्ती प्रसृतविभवा जृम्भमाणोत्थिताऽभूत् ॥१७॥

तस्मिन्नेव क्षणे दिनेशोऽपि रम्यवक्षस्तटीका तामालोक्य स्वयमपि निभृतनिशीथिनीसुलभसौख्यमनुभूय—

निद्रानन्द्राजनितसकलस्वाङ्गसंसर्गसिद्धं
बद्धालस्य लघुपरिहरन्नङ्गभङ्गीं वितन्वन् ।
कार्यासक्तां दयितनलिनीं वीक्ष्य, ससाधयन्ती
पेयं भोज्यं, ललितरचनां कल्पयित्वा द्रागुदतिष्ठत् ॥१८॥

यदा दिनेशः समुत्थितस्तदा तदानीतनी प्रकृतिरतीव मनोमोहिनी निजवैभवोल्लासिनी विलासिनी कामिनीव सकलप्राणिमात्रविबोधिन्यपि समुन्मादिनी, सततकाम्यासीत्, न तदा सर्वथा नैश तमोऽपसृतमासीत् । उषसः कौमारकेलिम्, शैशवचापल्य च तनूकुर्वन् तस्या· प्रभायाः प्रथम एव किरणप्रस्फुरि(टि)तोऽभवत् । प्रायः सर्वेषा नयनरङ्गस्थल्या स्वकीय जनोन्मादन लास्य कलयन्ती निद्राङ्गना कदाचनसम्मुखागता कदाचिच्च तिरोहिता कदाचिल्लोकलोचनपुटकोपरि समुच्छलन्तीव विचित्रा कमनीया केलिं कलयति स्म ।

उन्मुक्तः आकाशः समस्तचराचरोपरि समास्तृतः स्वात्मनोऽक्षर ब्रह्मत्व प्रकटयन् स्वात्मच्छायाच्छत्र विस्तीर्य ह्यननुमेय विश्वरक्षणकार्यं समुद्वहन्निवास्ते । स्वच्छन्दो वायुरपि जननयनफलकोन्नयननिमीलनोन्मीलनव्यापारैः सह क्रीडन्, प्राभातिकहिमकणससर्गलब्धशैत्यः प्रवहति स्म मन्द मन्दमिति ।

विलासोत्सवसाक्षीव निजसुधासेकसर्वर्धितसमुत्सारः, पीयूषपूरपूरितप्राणसञ्चारः, कुसुमसायकसायकोन्नायको रजनीनायकः, गगनागतमन्धकारं विलुम्पन् सुधामयरश्मिजालैः सतत धरणिमण्डल धवलयन् राजते स्म निस्तन्द्रश्चन्द्रः । चपलयति स्म तदानीमपि स्वचन्द्रिकास्वादनचटुलचञ्चुपुटाश्चारुचकोरतल्लजान् ।

समन्तात् प्रासादशिखरेषु विशदचन्द्रिकावदातमशकहरीपरीतपर्यङ्केषु-पाण्डरप्रच्छदपटावृतविष्टरेषु बहवो नरा नार्यश्च क्वचित्संवलिताः परस्परभुजोपधानविधानविलासितविहाराः क्वचिच्च पृथक्-पृथगेकैकशः स्वतन्त्रशयना क्वचन कामिनीपयोधरयुगलान्तरालनिहितमुखमण्डलैस्त-न्यपानपरिशिष्ठितै करैकवृतापरस्तनचूचुकामर्शनपरै बालैः सह स्वभुजाकृष्टशिशुभ्यः प्रदत्तहृदयसान्निध्याः रमण्योऽधुनाऽपि न जहति स्म चिरसमयसङ्गिन्याः निद्रासहचर्य्याः सुलभसङ्गम् ।

अत्रापि दिनेशभवनशिखरोपर्य्यासीत् सुसज्जितसर्वविधविलास-सामग्रीसनाथा पल्यङ्गद्वयी, तयोरेकतरस्मिस्तु पर्यङ्के सम्प्रति स्वय दिनेशः स्वात्मानमवलोकते स्म, अपरस्मिश्च समीपस्थे भुक्त्वोज्झित कुसुमहारमेव निपतितमवैक्षत् नासीत्तदानी तत्प्रियनमा सा—

**कमलिनोदलकोमलमञ्जुला, कमलकोषसमुद्गतविग्रहा ।"**
**कमलनाभहृदिस्थितिनिःस्पृहाऽवनिगता नलिनी कमलाऽपरा ॥१६॥**

या च दिनेशः समीपस्थपर्यङ्के स्वपार्श्वशयितामिव।मन्यत सा तु ततः पूर्वमेव समुत्थाय तदर्थ चायपेय सोष्णवेसवार निर्माय समानेतु समार्जनशोधनादिभिः सौध सज्जयित्वा दन्तधावनार्थ जलपूरितभृङ्गार-कानयनादिक्रियाकलान सयोजयितु सलग्नाऽभवत् । तत्र त्वपरस्मिन् पर्यङ्के दिनेशस्य गृहमण्डनभूता सुतद्वयी शेते स्म ।

यथा दिनेशः अर्धनिद्रितावस्थायामेव यामस्पष्टवर्णां दूरतः समायातां गीतिं सुमधुरमन्द्रस्वरेणाशृणोत् - सा सम्प्रति मन्द-मन्दगत्या समायान्तीव किञ्चित्किञ्चित्स्पष्टा समभवत् ।

श्रुत्वा च ता दिनेशः समचिन्तयत्-यत् कीदृशीय गीतिः? केन विरचिता ? कुतः समुद्धृता, ? गीतिस्थ हि घटनाचक्र कुतः समुपलब्धम् ? किमेतस्या लक्ष्यभूता-विषयाः, अभिनेतारश्च वयमेव ?

सम्प्रति प्राभातिकप्रसन्नशान्तवेलायामिय स्वरलहरी स्वतन्त्रवायुमण्डले प्रसृता स्पष्टस्पष्टतरा भवन्ती दिनेशस्य कर्णरन्ध्र रसपूरितमकरोत्। दिनेशस्य सम्मुखे सकलाऽतीताऽस्मृति सहसा सविग्रहेव समुपस्थिताऽभवत्। सङ्गीतस्य "स्थायी" तु "स्वप्नमेतद्देवमाया, किं तदासीदिन्द्रजालम्" आसीत् दिनेशस्त्वरित बहिरागत्य गायक त पथिक-पुन प्रैरयत्—

प्रेम्णाऽगायत् स. पथिक —[ गीति ]

"स्वप्नमासीद्देवमाया-किं तदासीदिन्द्रजालम्।
सम्पदाविपदामयद्वन्द्वे कुतो मे मोहजालम्।।

[ १ ]

कः समायातोऽधुना कीदृग्विधो वा, मे सुहृत्।
कः समालापः सुखावापः! स्रवन्त्यापः सकृत्।।
क्वास्ति सुभगं नन्दनोपममुपवनं सघनं द्रुमैः?
क्वास्ति मञ्जुलकलरवो वयसां सुसङ्गीतक्रमैः?
नैव पश्याम्यद्य लवलीप्रोल्लसच्चूतालवालम्
सम्पदाविपदामयद्वन्द्वे कुतो मे मोहजालम्
।। स्वप्नमासी० ।।

[ २ ]

क्वास्ति प्रस्तर (दृषदः) खण्डकणिकानिर्मितः सत्प्राङ्गणः
क्वास्ति शीतलमन्दसुरभिः सैष सान्ध्यसमीरणः?
सङ्गमर्मरवेदिका सा मञ्जुसिंहासनमयी
दिव्यरत्नप्रेङ्खिता सा पीठिका ज्योतिमयी
क्वास्ति सुरभितकाननं सुमनोभरैरुत्तालतालम्?
सम्पदाविपदामयद्वन्द्वे कुतो मे मोहजालम्
।। स्वप्नमासी० ।।

[ ३ ]

कीदृशं साहित्यसम्मेलनमहो सा कीदृशी–
मञ्जुरसनिःष्यन्दिनी रचना नवीना प्रेयसी ?
कास्ति सर्वोत्कृष्ट एषः सत्पुरस्कारः प्रकृष्टः ?
सैष शिष्टगणो वरिष्ठः कास्ति मत्सदृशोऽवरिष्ठः ?

कास्ति सङ्गीतम्, सुधोपमलास्यमिदमुत्तालमालम् ?
सम्पदाविपदामयद्वन्द्वे कुतो मे मोहजालम्

॥ स्वप्नमासी० ॥

[ ४ ]

साद्य खट्वापूर्णजीर्णाऽपूरिता कूपाकृतिः
भूरिमलिना हीनवसना कास्ति मे कन्थाऽऽस्तृतिः
कुत्र यातो दीनताया दुर्दशाया अट्टहासः
कुत्र नलिनीखिन्नमनसो मूकपीडाया विलासः

अर्धपीतमदाऽऽविलं चषकं समुज्झितपूतिहालम्
सम्पदाविपदामयद्वन्द्वे कुतो मे मोहजालम्

॥ स्वप्नमासी० ॥

[ ५ ]

बालरोदनमूलशूलं स्तन्यहीनमशोभनम्
भारभूतपयोधरद्वन्द्वं, सुधांशुविशोधनम्
बोधनं चिरसुस्मृतीनां, रोधनं करुणादृशाम्
मोदनञ्च मृगीदृशामनुमोदनं हृदयस्पृशाम्

साश्रुनिःश्वसितं नलिन्या हन्त मुखमलकालिजालम्
सम्पदाविपदामयद्वन्द्वे कुतो मे मोहजालम्

॥ स्वप्नमासी० ॥

केन द्रव्याऽऽदेश एष प्रेषितः, कुत आगतः
केन वाऽपहृतः पुरा ह्यधुना कथं पुनराहृतः
कः पुरस्कारोऽधुना समुपाहृतः सम्मानतः
या प्रसिद्धिरुपाश्रिता, भुवि नव्यकाव्यविधानतः

ईशलीलेयं विचित्रा कोऽनुपश्येन्मनुजभालम्
सम्पदाविपदामयद्वन्द्वे कुतो मे मोहजालम् ॥

स्वप्नमासीद्देवमाया, किम् तदासीदिन्द्रजालम् ॥



# फलव्यहो लक्षगुणं श्रमार्जितम्

कस्मिश्चिदेकस्मिन् राज्ये कोऽपि महीसुरः स्वभार्यया शीलवत्या सह निवसन् भूरिकाठिन्येन स्वकीया दैनन्दिनी यात्रा सम्पादयति स्म। प्रत्यहं तस्य भोजनाच्छादनार्थमपि महती चिन्ता तन्मनो व्यथते स्म। ततोऽपि द्विगुणतर तस्य भार्यायाः हृदय दूयते स्म। भोजनसामग्रीसमासादनायैव पर्याकुलचित्ता सा सर्वं दिन यथाकथञ्चिद् भूरि-भूरि श्रम विधाय यत् किमपि "तिल, कङ्गु, प्रियङ्गु, मुद्ग, माष, कोद्रव, यव, गोधूमादिकं सुलभ (लब्ध) वा स्यात् तेनैव स्वोदरपारणा (पालना) कुर्वती सभर्तृका सा दारिद्र्यदेवात् सुतरा मुक्ति कामयमाना दिवानिश चिन्तयन्त्यपि कमप्युपाय, किमपि वा कर्म न सम्यग् विजानन्त्येकदा सप्रश्रय सकरुणं साश्रुनयना स्वकान्तमुवाच—

द्विजसतीः—भगवन्!

नैमित्तिकानि सुकृतानि समाचरन्ती,
यत्नात्कथञ्चिदपि लब्धकणा सुपूर्णाम्,
नाहं महोदरदरीं परिपूरयामि,
नो वा भवन्तमपि तैर्लघु तोषयामि॥१॥

नाथ ! सतत नित्यनैमित्तिकानि कर्माणि कुर्वती, यथा-कथञ्चित् कुतोऽपि लब्धकणा, तै कथमप्यर्द्ध सम्भृतोदरमात्रा जीवनयात्रा निर्वहन्ती कियत्कालमित्थ जीविष्यामि ? भवन्तोऽपि तथैव समाचरन्तो न कदाचन पूर्णोदर भुञ्जते ? तर्हि नास्ति जगतीतले कश्चनैतादृशोऽन्नसङ्कट-विघटनार्थमुपाय ? येन नौ स्वोदरभरणचिन्ता दूर यायात् । न विचिन्त्यते कदाचन भवता क्वचन शान्तचेतसा ? स्वामिन् ! यद्यनुचित न मन्येत, तर्ह्यस्त्येकः सरलतम समुपाय, येनास्माक सर्वदा सार्वदेशीया, सार्वकालिकी, वाऽन्नसङ्कटग्रस्ता व्यस्ता दुरवस्था सद्य. एव दूरीभूता भवेत् ।

भगवन् ! नैवाऽविदित भवतोऽपि किञ्चित्--"यदत्रास्माक महाराजो दयादाक्षिण्यौदार्यादिसनाथो मनुजनाथः स्वगुणगणोद्भासित-भुवनवलयो, निजदानधाराप्रवाहितसकलयाचककुलदारिद्रयपटलः, स्वयशश्चन्द्रचन्द्रिकावदातीकृताखिललोकनिलय", समयसारितविद्वज्जन-शोकनिवह कवि-कोककुलप्रणयी विनयी परमगम्भीरो धीरो दानवीरो वीरसिहो नाम नरपती राजते धरणिमण्डलाखण्डल. । स हि प्रत्यह शतसहस्रावधि समाश्रितद्वाराणा याचनापराणा ह्यसुराणामधीश्वरो बलिरिव कामना पूरयितु धृतव्रतोऽर्थिनामहर्निश समपनयति समागतानां दारिद्रयदुरित सङ्कट वा विकटम् । अतो निवेदयामि-भवानपि तमुपसृत्य यदि याचेत, तर्हि निश्चयमेव सः सद्योऽस्माक दैन्य नाशयिष्यति । किमतः पर भणामि ।

ब्राह्मण —देवि ! त्वन्तु जानास्येव, नाह-दातृदत्तदानोपभोगी, योगीव कन्दमूलाशनव्यसनी, स्वभुजोपार्जितमेव द्रव्य श्रेयस्कर मन्वानो न राज्ञा कोषगत विनिहतमुनिव्रत बहुलक्लेशघन घन वाञ्छामि । यतो हि राजानो न स्वपरिश्रमोपार्जित धनमर्जयन्ति । तेषा कोषे सम्भृत तु सकल धनं प्रजाजनैः स्वस्वपरिश्रमोपार्जित, तेभ्य एव यथाकथ, येन केनापि प्रकारेणापहृत समाकलित वा विद्यते । अतो नाह प्रजाजननिधिभूत, ततो वा

समासादित समपहृत वा तत्कोषरक्षित द्रव्य स्वात्मोपयोगाय योगक्षेमाय वा कथमपि कामये। न वा तत्समीप गत्वा किमपि याचितु, ततो वा लब्धु स्पृहयामि। अत एवाद्य प्रभृति—

"नाहं कदाचिदपि तन्निकटे प्रयाता,
नो याचितः क्वचन सैष मया नरेशः।
नाद्यापि किञ्चिदपि कोषगतं तदीयं,
लब्धं मया निजसुखानुभवाय देवि ॥२॥

किन्त्वद्य दैन्यदयनीयदशाविषण्णां,
आशामनोरथशतासनसंनिषण्णाम्।
त्वां वीक्ष्य राजनिधिकोषनिबद्धभावां,
चेखिद्यते भृशमिदं समदुःखि चेतः ॥३॥

अतोऽनभीप्सितमपि कर्म कर्तु प्रयतिष्ये। गमिष्याम्यथ च त्वदुपदिष्टेऽध्वनि। श्रयिष्येऽथवा नृपतिसान्निध्यम्, परीक्षिष्ये च भाग्यपटलम्, अन्वीक्षिष्येऽद्य पुनः स्वनियमव्रतम्। समीक्षिष्ये वा स्वकीयाऽदीनवचनरचनापरिपाटीम्। वितरिष्यामि ते वपुषि बलपोष, दारिद्र्यपरिमोषं, मनस्तोष, ह्यभीप्सित वित्तम्।

इत्थ स्वभार्यां विबोध्य समाश्वास्य च, तथाकथितमेव कर्तुकामः समाश्वासितनिजवामः सन्तोषादिनियमोपनियमव्रततपोधामा, सत्यकामनामा द्विजवरो राज्ञः समीपमुपस्थातु प्रस्थातुमुपचक्रमे। स च राजसमीपमुपगतो यथानियम राज्ञाऽपि नमभ्युत्थानासनादिभिः सादर सप्रणामं सबहुमानं समासादितसम्मानः समधिकगुणगणगम्भीरया धीरया गिरा प्रोवाच—श्रावयामास च—आशीर्वचनपुरःसरं पद्यद्वयमिद द्विजपुङ्गवः—

द्विजवरः—

"राजंस्त्वद्यशसाऽमलेन भुवनं दिव्यैकरूपं स्फुर—
च्छुक्लं वीक्ष्य विभिन्नरूपरचना जाता विधातुर्वृथा ॥

सूर्यो नैजतुरङ्गमान्, न हि, शची शक्रं, सुपर्णं हरि—
र्विष्णुं श्रीरपि संस्थितं परिचिनोत्येतन्महत्कौतुकम् ।।४।।

किञ्च—

त्वद्दानाम्बुसरिद्वरा वसुमतीं नित्यं पुनाना सतां,
त्वत्सान्निध्यमुपेयुषां सहचरा दारिद्र्यविद्राविणी ॥
भूमेर्दैन्यमपाहरन्त्यपि जगज्जालान्धकारापहा,
तन्वन्ती सुयशस्तमोष्वपि सितं पक्षं शिरं धास्यति ।।५।।

आशीर्वचनसम्मिश्रं दानमानप्रशंसनम् ।।
यशःश्लोकञ्च सुश्लोकं,—द्वयं श्रुत्वातिहर्षितः ।।६।।
उवाच वचनं श्लक्ष्णम्– [ राजा ] ··· ···

राजाः—

··· ··· ··· ब्रूहि भोः ! यदभीप्सितम् '
द्विजपुङ्गव ! मच्छक्यं, तत्सर्वं वितराम्यहम् ।७।।

द्विजः—

"राजन् ! यदुक्तं भवता कुलोचितं, स्वरूपशोभानुगुणं यशस्करम् ।
अहोऽद्य सामर्थ्यवतोऽपि ते वचः, तनोति कीर्तिं विनयं नयञ्च ।।८।।

जननाथ ! तवानुकम्पया, मधुरस्निग्धदृशा विलोकिताः ।
परिपूरितसन्मनोरथा, भुवि जाता, अधुना निवेद्यते ।।९।।

यदपि भोः ! नहि मे किमपीप्सितं, न खलु मे गृहिणीसुखमन्वभूत् ।
समुपवासकृशाऽद्य तपस्विनी, सरसदानसुधां तृषितेहते ।।१०।।

श्रुत्वैतद्विदितसकलाभिप्रायो महाराजो दानवीरो वीरसिंहः पार्श्वस्थं स्वकीयामात्यं कोषाध्यक्षञ्चाऽऽज्ञापयामास—"यदयं भूसुराग्रगण्यः पुण्यदर्शनस्तपोमूर्तिः सम्प्रति यावन्तं धनराशिं कामयते, तावन्तमेवास्मै समर्पयन्त्विति । नीयताञ्चायं तत्रैव कोषालयं । धनागारमाश्रित्य यद्यद्वस्तु

सुवर्णं रत्नानि, भूषणानि वा स्पृहयेदयम्, तत्तत्सर्वं दत्वास्मै, सद्यो मां सूचयन्तु । ततोऽपि यदि किमपि दानीयमवशिष्ट भवेत् तत्सकलमहं पूरयिष्यामि यदर्थमयमाज्ञापयिष्यति महात्मा ।

द्विजः—धन्य धन्य महाराज ! स्वस्तिः स्ताच्छुभकर्मणे ।
श्रीर्ह्रीः कान्तिर्यशो धर्मो वर्धतां ते दिने दिने ॥११॥

किञ्च— प्रशस्तौदार्यसौशील्य-कल्पपादपमण्डिता ।
सौख्यनिर्झरिणी भाति युष्मद्दानसरिद्वरा ॥१२॥

यद्यपि— प्रस्फुरच्छीकराऽऽसारदैन्यतापापहारिणी ।
श्रीमत्कोषप्रसूतेयं, न मे तोषाय कल्पते ॥१३॥

यतः—कोषोऽयं ते प्रजानाथ ! प्रजाभिः (नां) श्रमवर्द्धितः ।
तासां शेवधिभूतश्च । अत -"नाहं वाञ्छामि तद्धनम्" ॥१४॥
"यदि किञ्चिच्छ्रमेनैव भवता समुपार्जितम्"
ततः किञ्चित्समानीय, समुपानीयतां प्रभो ! ॥१५॥

इति श्रुत्वा—
"परं विस्मयमापन्नो महाराजो ह्यवाङ्मुखः ।"
स्तब्धवाक् क्षणमास्थाय, प्रोवाच द्विजपुङ्गवम् ॥१६॥

राजाः—द्विजराज
प्रशंसनीयः खलु ते विचारः प्रचारणीयो भुवि राजसङ्घे ।
अहं यतिष्ये स्वपरिश्रमेण ह्युपार्जितैस्त्वांपरितोषयिष्ये ॥१७॥

इति ब्राह्मण सन्तोष्य पण्डितप्रवर, परेद्युः पुनः समागमनार्थं तं सादर सबहुमानमामन्त्रयामास महाराजः । अनन्तरञ्च सः प्रजानाथः समागतायां, सकलभूमिव्याप्तायाञ्च रजन्या, समन्तात्प्रसृते च नीरन्ध्रे तमसि, स्ववेषभूषा परित्यज्य सामान्यदीनभृत्यजनसुलभं श्रमोपजीविजनोपयोगिन वेष धृत्वा प्रच्छादितनिजस्वरूप. किमपि कार्यं स्वात्मसाध्य सद्योऽन्वेष्टुकामः परितो नगर बभ्राम । अभितः परिभ्रमन्

यदा किमपि कार्यं न लब्धवान् महाराजः, तदा कस्यचनैकस्य लोहकारस्य समीपं गत्वा, तत्समीपमेव तप्ताय-पिण्ड-परिताडनमेव कर्म कर्तुं समुद्यतोऽभूत् ।

किन्तु लोहकारमात्रकरणीयेन, अतिकठोरकर्माभ्यस्तजनोचितेन, सर्वथैवाश्रुताकृतपूर्वेण दुष्करकर्मणा भूरिभूरिपरिश्रान्तः परिक्लान्तो नितान्तखिन्नः सपदि समुद्भूतस्थूलजलभृतफलकः [पिटक] जातकोमलकरपल्लवव्यथः श्रमसमुत्पन्नप्रस्वेदधारास्नापितसर्वाङ्गो भृशं दूयमानो नाधिकश्रमं विधातुं शक्तस्त्यक्ततत्कर्मा प्रजानां प्रभुर्नाभवत् प्रभुस्ततोऽधिकं किमपि कर्तुम्, निवेदयामास च लोहकारम् बन्धो ! नाद्यावधि कृतेनैतादृशेन परिश्रमेण शिथिलीकृतसर्वसन्धिकोऽधिकं नाहं किमपि कर्तुं पारयामीति । मन्यते यत् समुचितं द्रव्यं कृतस्यास्य परिश्रमस्य पारिश्रमिकभूतं, तदेव वितरेति ।

लोहकारोऽपि-सामान्यपुरुषापेक्षया किमप्यधिकमेव द्रव्यं तस्मै प्रच्छन्नराजचिह्नाय ह्यपरिचितायापि प्रशान्तमधुराकृतये कृतस्वल्पतमपरिश्रमायापि राज्ञे पञ्चकपर्दिकाः प्रायच्छत् ।

"कृतभूरिश्रमो राजा लब्धपञ्चकपर्दिकः ।
राजप्रासादमासाद्याशेत सर्वाङ्गदुर्व्यथः ॥१८॥
ततोऽवशिष्टां तां रात्रिं सुखसुस्वापनिर्वृताम् ।
समाप्य, द्विजसत्कारं कर्तुं प्रातः समुत्थितः ॥१९॥

अथाऽपरेद्युः स महीसुरः पुनः, समागतस्तत्र सुसत्कृतीच्छया ।
नृपोऽपि तस्मै स्वकृतश्रमार्जिताः कपर्दिकाः पञ्चसमार्पयन्मुदा॥२०॥

इत्थं महाराजेन स्वकीयपरिश्रमोपलब्धाभिः अद्भुतकर्मसिद्धाभिः पञ्चसङ्ख्याकाभिः कपर्दिकाभिः सप्रश्रयं सबहुमानं सम्मानितः प्रत्यर्पितशुभाशीर्वचनो द्विजराजः राज्ञा लब्धानुमतिकः, प्रशंसन् बहु बहु महाराजं स्वगृहं प्रत्यागतः ।

समानं दानसत्कारैः पूजितश्च विसर्जितः ।
समागतो द्विजो गेहं प्राप्तपञ्चकपर्दिकः ॥२१॥

द्विजपत्नी–दानवीरस्य नृपतेः समीपं नु यथा कथम् ।
विनयानुनयाभ्याञ्च प्रेषितो निजवल्लभः ॥२२॥

राज्ञः सकाशात्समवाप्य भूरि द्युमन्ति रत्नाभरणानि कामम् ।
वासांसि पर्य्याप्तधनेन साकमायास्यतीतीक्षितमुत्सुकाऽभूत् ॥२३॥

तदानी सा महाराजेन प्रसारितायाः स्वीयदानसुरवरतरलतरङ्गिण्याः स्वकान्तकरगताया वारिणि परमपावने ह्यनन्तकालात्सहचरभूत, दुरूह-दैन्यकल्मषकर्दम, क्षालयितु स्वभर्त्रा च समानीतमहद्धनराशिमालोक्य नैज चञ्चच्चेतश्चन्दयितु नानामण्डनमण्डित निजाङ्गञ्च विविधोप-करणसुसज्जित, विचित्रचित्रशालादिभिः परिराजित निजभवन, महामहद्धनराशिसम्भृत निजकोषालयम्, नानाविधधान्यराशिपरिपूर्ण भाण्डागारम्, नैकविधकौशेयकार्पास - चीनाशुकादिभि सुसज्जिता शृङ्गारशाला, अनेकाभरणसम्भारभासुरा शृङ्गारमञ्जूषाञ्च द्रष्टुकामा, स्वभर्त्रागमनप्रतीक्षयैव यथाकथञ्चिद् यापितयामा, समाराधितविष्णुवामा, सर्वदास्वाभिमानिनी द्विजभामिनी पुन पुन द्वारदेशमुपागत्य तदागमन-मार्गमुदीक्षमाणा निजकामान् पूरयितु सोल्लास सस्पृह तद्दर्शनेन नयनसाफल्यमवाप ।

सहसैव समायान्त निजकान्त दूरादेव सस्मितमालोक्य हर्ष-प्रकर्षोत्सवा, विकसितवदननलिना मलिनाम्बराऽपि पङ्कगता पद्मिनीव शोभते स्म । सोऽपि द्विजपुङ्गव , सुचिरप्रतीक्षमाणा, स्वातिबिन्दु-पानप्रतीक्षापरवशा चातकीमिव, पूर्णसुधाकरकरात्प्रस्रवन्ती सुधाधारा मास्वादयितुमेव चटुलचञ्चुपुटा चकोरकामिनीमिव, सघनघनघटां समुद्वीक्ष्य हर्षोत्कर्षेण समारब्धलास्योच्छ्राया प्रसारितचित्रविचित्रस्वच्छ-पिच्छपटला मयूरीमिव समूरीकृतविविधमनोरथमाला शालाभ्यन्तरगतां

निजवचनानुरता ता स्वकान्तामेकान्तासनामालोक्य किञ्चित्सञ्जात-शङ्को रङ्कोऽवनीसुर शनै शनै स्वस्वामिनीसकाशमुपास्य मधुरश्लक्ष्णयाऽनया गिरा व्याजहार —

घनश्यामे! भामे! ह्यभिलषितकामे! धृतरते!
प्रतीक्षायाः कालं ह्युरसि धृतमालं कलयसि।
कथं भाण्डागारं विविधधनभारं, वसुमती-
विभूतेरागारं कलयितुमनाः केलिसदनम् ॥२४॥

देवि! तवाऽऽग्रहयोगात् सुयोग प्राप्य राजानमुपगम्य तत्समुखे निवेदितो मया स्वाभिप्राय परमौदार्यव्यसनी महाराजोऽपि मे हार्दभाव विज्ञाय मद्वचनानुकूलमेव समाचरन् स्वश्रमोपार्जितमेव द्रव्य समस्त-धनराशिशेवधिभूत रत्नपञ्चकमिद प्रायच्छत्। तदधुना समुपहरामि ते स्वाभिलषित वस्तु, गृहाणैतत् सहर्षम्। इति वदन् स द्विजवर प्रहसन्नेव तस्या अङ्के (शाटिकाञ्चले) कपर्दिकापञ्चक निक्षिप्तवान्।

सा द्विजराजसती सुचिरकालात्, नानाकल्लोलमालाऽऽकुलितकेलि-प्रतिस्पर्द्धिन्या नृपतिदानसुरतरङ्गिण्या पावने पय पूरे स्नपनसौख्य-शुभाशया स्वभर्तुरागमनवेला प्रतीक्षमाणा कल्पयन्तीव विविधमनोरथ-मयानि शातजातानि, भूरिभूरिधनभारवहनपरिश्रान्त समायान्त स्वकान्त द्रष्टुकामा वराकी महामहादानव्यसनिनो महाराजात् केवल काकिणिकापञ्च कमात्र द्रव्य प्रेक्ष्य सहसैव तुषारपातपरिक्लिष्टनलिनीव परिम्लानमुखी सुमुखी साश्रुनयना, सुनयना सद्योहिमानी महाऽऽसारजडीभूतप्रमदवनलतेव प्रचण्डझञ्झावाताऽऽहता कदलीव, प्रकोपात्प्रवेपमानसर्वाङ्गी दावानलाऽऽ-क्रान्तकाननकुरङ्गीव भृश दूयमानमानसा किञ्चिदनुक्त्वैव क्षण परमाश्चर्यचकिता, चित्रलिखितेव स्थिताऽभूत्। विनिहतसकलशुभाशा लब्धप्रणष्टमनोरथत्वात्समुद्विग्नमानसा निजाङ्कात् स्वभर्तृदतास्ता-पञ्चकपर्दिका· सद्यो गवाक्षात् स्वगृहपृष्ठभागस्थेऽवकरे प्राक्षिपत्।

द्विजवरस्तु पूर्वत एवासञ्जातमोहो न तत्र बद्धाऽनुरागो नानुभवति स्म लब्धे प्रणष्टे वा धने हर्षशोकौ। न वा स तत्रापि गतो यत्र ता. पञ्चकाकिणिका तद्भार्यया प्रक्षिप्ता, ता पुनरानेतुम्। स तु यथापूर्व विहितसकलक्रियाकलाप तथैव समाचरन् स्वस्थानस्थित एवाभवत्। ब्राह्मणी च पुनरपि भग्नमनोरथा, स्वप्नदृष्टामिव हर्षशोकबहुला निज-कल्पनामयी नवीनामेव ता ससृति मन्वाना सुप्तप्रबुद्धेव यथापूर्वं स्वकीया पूर्णाभ्यस्ता कार्यप्रणाली तथैव सम्पादयामास। पुनरपि दैनन्दिनी स्वकीयाभ्यवहारा वृत्ति यथाकथञ्चिन्निर्वाहयतिस्म।

इत्थ पुन पुनर्महता सङ्कटेन काल यापयन्ती सा द्विजराजप्रिया सुनयना सर्वथा सर्वत्र प्रयतमानाऽपि किमपि कुतोऽपि किञ्चिदपि न प्राप्य भोजनार्थं, नितान्तखिन्ना सा प्रोवाच स्वकान्तमेकान्ते—

द्विजभार्या —नाथ! सर्व दिनमद्य प्रयतमानाऽपि नावाप किमपि पारणाविधानसमाधानायान्धसोभागम्-भोज्य - पेय वा, येन स्वामिन. स्वात्मनश्च ह्य दरदर्य्या पोषण सम्पाद्येत। भविष्यत्यद्याऽपि किमु निरन्नोपवास ? किमनुष्ठेयमधुना। सम्प्रति देव एव विचिन्त्य कलयतु कमप्युपायविशेष, यः सिद्धिकर स्यात्।

द्विज.—श्रुत्वैतदखिलं विप्रः सर्वमीशकृतं स्मरन्।
यदृच्छालाभसन्तुष्ट. कष्टं नैव समन्वभूत्।।२५।

प्राह च.– स्वभुजोपार्जित द्रव्यं, परिश्रमसमुद्भवम्।
श्रेयस्करं चिरस्थायि भवति, स्थिरनिश्चय. (तात सुनिश्चय.)।।२६।।

हितञ्च पथ्यं सुखदं श्रमार्जितं, कृते समेषां विदुषां महीभृताम्।
अशेषभृत्तिव्यवसायिनां कृत श्रमोपलब्धं हितकृन्न याचितम्।।२७।।

समाहृतं वाऽपहृतं विलुण्ठितं, भवेत्कदाचिन्मनसो मुदावहम्।
युगान्तरे किन्तु विनाशकारकं, ध्रुवं भवत्येत्र न तापहारकम्।।२८।।

अतः—

**सदैव सर्वैः परिचिन्तनीयं, विनाश्रमं किञ्चिदपि ह्यवाप्तुम्।**
**कार्या प्रवृत्तिर्न कदापि लोके, धनेऽन्यदीयेऽवनिगेऽप्यदृष्टे ॥२९॥**

इत्थ सामान्यतया सर्वान् समुपदिशन्-सकलवर्णाचार्यः स द्विजः शिक्षयितुञ्च स्वकान्ता, स्वसिद्धान्तविनिश्चय प्रत्यक्षोदाहरणैः प्रत्यक्षीकुर्वन् करामलकवत् कारयितुञ्च प्रावोचन्निजगेहिनीम्—देवि ! नाधुनास्ति लोके किमप्यन्यदुपायान्तरम् यद्यस्ति चेत् त्वत्सविधे किमपि वस्त्राऽऽभूषणादिक विक्रयणीय वस्तुजात, तर्हि तदानय तद्विक्रीय, ततः प्राप्त धन्यतम धन-गृहीत्वा- नीत्वा च हट्टे, तेनैव भोज्य पेयपदार्थजातमानेष्यामि। भविष्यति च तेनाऽस्मत्पारणाविधिः सुसम्पन्नः। एतदर्थं गृहे न चेत् किमपि तर्हि गृहपृष्ठभाग गच्छ, तत्र यत किमपि मिलेत् क्रय्यम् (वस्तु) तत् सद्यः समानीय दीयताम्।

**द्विज पत्नी·—नाथ !**

**'यद्यपि क्रय्यवस्तूनां तत्र लब्धि कुतो भवेत्।**
**को रक्षिष्यत्यवकरे गेहपृष्ठे विमूढधी ॥३०॥**

**तथापि मे परो धर्म श्रीमदाज्ञानुपालनम्।**
**गत्वाऽन्विष्यामि यत्किञ्चि-दानेष्यामि मिलेद्यदि ॥३१॥**

इत्युक्त्वा सा स्वगेहपृष्ठभाग यथैव गच्छति-तथा तत्र साऽतीव रमणीय विविधपुष्पफलभारावनतशाखाप्रसर, नीरन्ध्रशीतलच्छाय, सुरद्रुमपञ्चकमिव विलसन्त तरुवरपञ्चक विरूढ विलोक्य ह्यतीवाश्चर्यचकिता नितान्तप्रमुदिता सा द्विजराजसती सत्वरमागत्य सविस्मयमिदमब्रवीत्—देव ! यत्र—

**'यदासीत्पुरा केवलं भस्मसङ्घ सदागोमयाद्यक्रय- सङ्करस्य।**
**अहो तत्र भान्तीह पुष्पैर्दलौघै· फलै· संनताः पञ्चवृक्षाः सुपुण्याः ।३२।**

अदृष्टानि तेषां फलान्यद्भुतानि लसन्तीव भास्वन्ति रत्नानि रात्रौ।
प्रकाशे तु तेषां प्रभा प्रस्फुरन्ती दृशोऽर्थ्यपूर्तिं बाधते दर्शकानाम् ॥३३॥

देव ! दर्शनीयमेव तेषा तु दर्शनमपि। नाद्यावधि कुत्राऽपि केनाऽपि दृष्टास्तादृशाः सुरपादपास्तु, किम्बहुना येषा पल्लवाः पुष्पाणि फलानि च, एकैकतो वैशिष्टचमुद्वहन्ति सर्वे। तेभ्यश्च दिवानिश सर्वदैव विचित्र-वर्णाः, नैकवर्णाश्च किरणाः प्रतिक्षण भिन्न-भिन्ना एव प्रस्फुरन्ति न तादृशी कान्तिः विलोकिता क्वचन रत्नानामपि। नाथ! तानि पुष्पाणि फलानि केवल दर्शनमात्रफलानि सन्ति ? आहोस्वित् समुपभोग-योग्यान्यपि। सत्वर तत्र गत्वा स्वनेत्रलाभसाफल्यन्तु स्वयमपि विदधातु देवः। ततः समादेशेनाप्यनुगृह्णातु भवान् "तैः कथ प्रसाधयामि सर्वं गृहभाण्डागारम्।"

प्रभो! न स्यादनुचित किमपि चेत्—तर्हि तेभ्यः कतिचित् फलानि पुष्पाणि वा समादाय गृहे नीत्वा तद्विशेषज्ञान् प्रदर्शयतु महाराजः, यदि मिलेयुश्चेत्केचन क्रेतारः तर्हि तानि विक्रीय भोजनाच्छादनव्यवस्था वितनोतु देवः। अहो पश्यतु देवदेवः, किमय भवतः प्रभावप्रकर्षः तपः-सिद्धिर्वा, कश्चन वरः उताहो देवदेवप्रसाद कुतः एतादृशाना पादपाना-मन्यथाऽत्र सम्भूतिः। अहो निःशेषमिद मलिनतममपि स्थल भूतले नन्दनवनमुपगतमिवालोक्यते, शोभते राजप्रासादविभूतिमय प्रमदवनम्-विविधरत्नप्रभापटलपरिराजिता राजसभेव मनो हरति। योगसिद्धि-रिवाभूतपूर्वा वितनुते सकलकुतूहलम्।

तच्छ्रुत्वा द्विजवरोऽपि कुतूहलवशात्तदालोकनाय प्रस्थितस्तया सह। गत्वा च तत्र स्वयमप्याश्चर्यचकितोऽभवत् किन्तु सद्यः एव सकल तद्रहस्यं विज्ञाय प्रावोचत्स्वकान्ताम्—

द्विज :— "सुरक्षणीयाः खलु देवि ! वृक्षा,
उप्तास्त्वयेमे निजकौशलेन।
प्राणाधिकाः प्राणपणेन रक्ष्याः
सर्वस्वभूतास्तव सौख्यमूला ॥३४॥

राज्ञस्तपःशौर्यशरीरजाता परिश्रमाप्ता सफला विभूतिः ।
सानुग्रहं दातृवरेण दत्ता, लब्धा त्वया पूर्वतपोबलेन ।।३५।।

नैतान् कुठाराभिहतान् विदध्या कश्चित् कदाचित् कुमतिः कृतघ्नः ।
अतः सतर्कं जलसेकखाद्यै रंद्याः, भवेयुः सततं समृद्धाः ।।३६।।

द्विजभार्याः—

आश्चर्यमेतद्भवता यदुक्तं, मया समुप्ताः सुरपादपास्ते ।
न स्मर्य्यते नाथ ! कदा मया ते. आरोपिताः कुत्र कथं किमर्थम् ।।३७।।

[illegible]न् विधिज्ञो विधिकृत्यभिज्ञः परावरज्ञानवनस्पतिज्ञः ।
रहस्यवेत्ताऽखिलसंशयानां छेत्ता, च जाड्यान्धतमःप्रभेत्ता ।।३८।।

प्रकाशय ब्रह्मविदां वरिष्ठ !
प्रेष्ठ ! प्रियाणामिह यद्रहस्यम् ।
"कीदृग् विधाः किं फलदाः, कुतस्त्याः,
शापेन सिद्धाः द्रुमतां गताः किम् ? ।।३९।।

ब्राह्मणः—

"न स्मर्य्यते भामिनि ! किं भवत्या स्तुत्याः सुभृत्यायितभूमिपेन ।
महत्तपोलब्धकपर्दिकाः याः लब्धाश्च दत्ताः खलु ताः गृहीताः ।।४०।।

पुनः—

स्त्रियः स्वभावाद्धनलुब्धभावादज्ञानतः क्रोधवशाच्च मौढ्यात् ।
माहात्म्यबोधानुभवेन हीना त्वं प्राक्षिपस्ताः स्वगवाक्षमार्गात् ।।४१।।

ता एव—

अमोघवीर्या नरनाथशौर्याच्छारीरकृच्छ्रात्तपसः प्रसूताः ।
सृष्टप्रभावा द्रुमतां गतास्ता स्रवन्ति रत्नानि महान्ति तुभ्यम् ।।४१।।

इत्थं स्वभर्तृमुखाच्छ्रुत्वा—यद्येताः ता एव कपर्दिकाः, या हि अस्माकं दानवीरेण महाराजेन स्वकीयशारीरिकपरिश्रमेण समुपार्जिताः पुनः

स्वकान्तेन स्वसिद्धान्तानुसारं श्रमेणैव समुपार्जितद्रव्येप्सुना निवेदिते, स्वाभिप्राये, प्रजानाथेनापि तदभिलषित तथाभूतमेव द्रव्य तस्मै समर्प्य स्वयशो भुवि विस्तारितम् । ततश्च ता समुपलब्धाः अमूल्यनिधिभूताः अकुण्ठितमहामहाप्रभावा· भूतलगता अमरनिधय इव, अनुपमरत्नराशि-प्रसवित्र्यः सम्प्रति पादपत्व गताः पञ्च कपर्दिका एव मम प्राङ्गणे विद्योतन्ते । कथमेषा समेषा पादपतामापन्नाना तरुणाना सिद्धतरूणा रक्षा कर्तव्या । इति विचिन्त्य सा स्वस्वामिन प्रोवाच—

द्विजपत्नीः—नाथ ! गृहपृष्ठभागे प्ररूढाना देवद्रुमाणा साम्प्रतिकी स्थितिरपि न समीचीना । यतो हि देवपादपास्तु प्राङ्गणशोभाधायिनो भवन्ति न पृष्ठसलग्नाः । देवद्रुमाणा साक्षात्तपःसिद्धाना प्रसिद्धाना सिद्धानामेवैषा पृष्ठभागस्थितिरपि न शुभावहा-प्रत्युत प्रायश्चित्तविधायिनी । श्रूयते हि—महामहान्तोऽपि पुरुषाः सिद्धाः देवा वा स्वकर्मविपाकेन केनाप्यदृष्टविशेषेण शापोपतापेन स्थावरता गताः नलकूबरादयोऽपि यमलार्जुनता प्राप्य कष्टमयान् वासरान् व्यतीयुरिति । अतो नात्र शापपाप-सन्तापविशेषैः पगुत्ववृक्षत्वादिरूपप्राप्तौ शङ्कालेश । ततश्च तादृश-रूपता प्रापितेषु धर्मादेशकारिभिः सर्वदा सर्वात्मना सर्वभावेन च न तेषा-मवहेलना, पृष्ठ दत्वा वाऽपमान करणीयः । इदमप्याकर्णितम्—यत् सुरभेः शापाद्वशावरोध पुनश्च तदाज्ञया समर्थेन वा गुरुणा निर्दिष्टेन तस्याः सन्ततेः नन्दिन्या [धेनो] सेवनेन समुपासाया च पुन सन्ततेर्लाभो वशवृद्धिश्च समभूदिति । अत एव नैषामपि सुरवरतरूणा स्वगृहपृष्ठभागे स्थितिर्हितावहा । एतदर्थमाज्ञापयतु देव· किं करणीयमिति ।

द्विजवरः—

"सत्यं त्वयोक्तं विदुषि ! त्वमेव नित्य श्रुताभ्यासविशुद्धबुद्धि ।
शास्त्रानुकूलं हितकृद्वचस्ते· स एव पन्थाः ऋषिभिः प्रदिष्ट ॥४३॥
नैषां सुरद्रुप्रतिरूपकाणामन्यत्र संस्थापन - रक्षणेऽथ ।
पृष्ठस्थितिर्नो शिवदा यदि स्यात्सद्यो गृहद्वारमिदं विधेहि ॥४४॥

विधीयतां प्राङ्गणसुस्थलीयं शिवा प्रशस्ता वितता समन्तात्।
मध्यस्थिताः पुष्पफलोपहारा दिव्यप्रभाभासुरसुस्थलीकाः ॥४५॥
दीव्यन्तु यस्यामिषुलोकपालास्तवाङ्गणे स्थावररूपिणस्ते।
देवाङ्गना यत्कुसुमैः फलौघैराकल्पवेषां रचनां विधातुम् ॥४६॥
नित्यं स्पृहाबद्धदृशो भजन्ति, स्वकान्तसंक्रान्तमनोऽभिलाषाः।
त्वदीयगेहाङ्गणमेत्य नैजं निन्दन्ति सौधं खलु नन्दनञ्च ॥४७॥
त्वमत्र देव प्रतिरूपरूपान् भजस्व भामे! भुवि भूरिमानैः।
नित्यं सुखासेवनलब्धरत्नैः फलैर्मुदा सम्भर गेहकोषम् ॥४८॥

द्विजपत्नीः—सम्यगवबोधितास्मि नाथ! सम्प्रति निर्दिश स्पष्टं किं किं कुर्याम् केन वा विधिनेति।

द्विजवर—देवि! सम्प्रति निजगृहद्वारमितोऽपसार्य अर्थात् विद्यमानं मुद्रितं कारयित्वा - पृष्ठभित्तिञ्च भित्त्वा वृक्षाभिमुखं सुमुखं द्वारं नवीनं परिकल्पय येन ते सुरद्रुमाः सम्मुखस्था शिवदाः सत्फलदाः भवेयुः। ततस्तेषां समन्तात् सुविशाला रम्या स्थली निर्मापनीया यस्याः मध्यभागे एते पञ्चलोकपाला इवात्र समाहूता शोभमाना भवेयु। ततो भवनाजिरे शोभाधायकान् महानिधिभूतान्येतान् प्रतिदिनं सपर्यासम्भारैः सम्यक् पूजय प्रभाते चैतेषामधस्तान्निपतितानि पुष्पाणि फलानि च स्वशाटिकाञ्चले-नैकत्रीकृत्य सञ्चिनुहि निजं भाण्डागारं च परिपूरितं कुरु। अहमपि भवत्या सन्तोषाय, अस्माकं दातृप्रवरस्य महाराजस्य प्रस्फुरद्यशसः प्रकाशनाय, स्वात्मनश्च तान् प्रति कृतज्ञतां प्रकटयितुम्, दैनिकाऽऽहारार्थं च सामग्रीसङ्कलनाय तेषु कतिपयानि रत्नभूतानि फलानि गृहीत्वा रत्नविक्रेतृणां निवहे महाहट्टपथे गत्वा परीक्षकाणां सम्मुखे संस्थाप्य तेषां मूल्यं निर्धारितं कारयिष्यामि। विक्रीयाथवा तानि तन्मूल्येन सर्वविधां भोजनाच्छादिनीं व्यवस्थां सम्पादयिष्यामि। इत्युक्त्वा-ततः तेषामधस्नात् कतिपयानि पुष्पाणि, फलानि चावचित्य विक्रेतुं तानि हट्टार्थं प्रस्थितो द्विजवरः।

द्विजराजोऽपि तानि स्ववस्त्रप्रान्ते सम्यङ्निबद्ध्य तत्र गतो, यत्र शतशो रत्नपरीक्षकाः क्रेतारो विक्रेतारः श्रेष्ठिनः सभ्याः भूयासो रत्नव्यवसायिन एकत्रिताः सकलविध रत्नव्यापारञ्च कुर्वन्तः स्थिताः आसन्। पण्डित-प्रवरञ्च समायान्तमालोक्य सर्वे प्रस्फुरन्नयना· त प्रत्युदैक्षन्त। केचन त स्वकीया दैनन्दिनी ग्रहदशा अपृच्छन्, कतिपया रत्नव्यापारविषये मूल्यसम्बन्धिनी न्यूनाधिकता जिज्ञासवः आसन्, अन्ये च स्वकीय स्वास्थ्य-मुद्दिश्य विविधान् वितर्कान् समुपस्थापयामासु। परे च पण्डितराजस्य स्थितिं प्रेक्षमाणा· नित्यनैमित्तिकी तदीया दशा लक्ष्यीकृत्य प्रश्नानकुर्वन्।

पण्डितपुङ्गवोऽपि समयमनुकूलमालक्ष्य स्वदुकूलप्रान्तात् तानि रत्नभूतानि तद्गृहारोपितवृक्षफलानि बहिर्निष्काश्य तेषा सम्मुखे रक्षितवान्—'रत्नानामेषा कियन्मूल्य भवितुमर्हति भवद्दृष्टौ, सम्यक् विविच्य परामृश्य चान्यैः सह प्रत्येकस्य पृथक्-पृथक् मूल्येन सूचय मामिति व्याजहार।

तेऽपि रत्नव्यवसायिनो विशेषज्ञाश्च दृष्ट्वैव तानि, विचित्राण्यदृ-ष्टपूर्वाणि—

लोकातीतप्रस्फुरत्कान्तमन्ति
व्यापारे वा नैव दृष्टानि कैश्चित्।
घोरध्वान्ते भानुरश्मिप्रकाशा-
न्यालोच्यैते नाभवन्द्रष्टुमीशाः ॥४९॥

**वारं वारं वीक्षमाणाः प्रशस्तैर्यन्त्रैस्तन्त्रैः पूर्वसिद्धैः प्रकारैः।**
**नो निर्णेतुं मूल्यमेतत्कमिद्धं, सिद्धं कर्तुं नाशकन् सहतास्ते ॥५०॥**

अब्रुवश्च ते—महाभाग! कुतः समुपलब्धानि महान्ति प्रभावन्तीमानि रत्नानि दिव्यतमानि। अस्मास्वपि ये ये विशिष्टाः शिष्टा·, सर्वविधाना रत्नाना गुणगणपरिगणने पारदृश्वानः सन्ति तेऽपि न प्रभवो भवितुमर्हन्ति समेषामेषा मूल्याङ्कने।

नाधुना पश्यामो लोके यदेतेषा ग्राहकाः क्रेतारश्चापि भवेयु । किम्बहुनाऽस्मास्वपि नास्ति कश्चनैतादृशो व्यवसायी यो ह्येतादृशानि क्वचन ससारे रत्नानि भवन्त्यपीत्यश्रौषीन्, ह्यद्राक्षीदित्यस्य तु का कथा । नगरेऽस्मिस्तु नास्ति कश्चनैतादृशो व्यापारी, यो हि मूल्य दत्वा रत्नानीमानि क्रीणीयात् । ऋते महाराज न कोऽपि प्रभुर्गृहीतु भवितुमर्हति । सामान्यदृष्टया स्थूलविवेचनेन तु, बाह्यानुमानत एतेष्वेकतमस्यैव मल्य शतलक्ष-[कोटि]मुद्राऽपि न्यूनैव प्रतिभाति । रत्नाना दर्शनेन तु ज्ञायते यत् न लौकिकानि-इमानि तु ननिचिद्दिव्यानि । अतोऽलौकिकाना सग्रहणे, क्रयणे वा कश्चनालौकिक एव पुरुषो भवेत् सोऽपि यदि स्व राज्यस्यार्धभाग प्रयच्छेत् तदा गृहीतु शक्नुयात् । एतदर्थ तु भवान् राजानमुपसृत्य तदग्रे स्थापयैतानि दिव्यरत्नानि । त्वरितमेव—

राजप्रासादमासाद्य सफलीकुरु सच्छ्रमम् ।
तदा सद्यः फलिष्यन्ति, हृदिस्थास्ते मनोरथा ॥५१॥

श्रुत्वैतद् द्विजपुङ्गवो नरपतेः प्रासादमासादयन्
सामीप्यं समवाप्य, राजपरिषन्मध्ये महेन्द्रायितम् ।
नानारत्नविभाविभासितसभं सभ्याग्रणीनां पुर
स्वस्त्याशीर्वचनं प्रयुज्य नृपति प्रोवाच हृद्यं वच ॥५२॥

द्विजवर.—महाराज ! नगरस्थसमस्तव्यवसायिधनिककुलमुपाश्रित्य, सकलशिष्टविशिष्टरत्नपरीक्षकपटलमपि पर्य्यालोच्य, विविधमहाव्यापारिनिवहेन सह सम्मन्त्र्य, परामृश्य च प्रेक्षकपटलैः सह, सर्वजनैश्च प्रेरितः श्रीमन्तमुपासितुमुपगतोऽद्य लभे स्वनयनानन्दसाफल्यमिति मधुरं ब्रुवन् स्वदुकूलप्रान्ताद् बहिर्निष्काश्य समुपस्थापयामास ह्यद्भुतप्रभापुञ्जप्रकाशितसभ ध्वस्तान्धकार मलिनीकृताशेषाऽऽभरणजटितनिखिलरत्नकान्तिमण्डल स्वगृहाङ्गणजनित रत्नत्रयम् । स्वकरतले सरक्ष्य राज्ञश्चक्षुषोर्विषयीकृत्य, तस्यैकतम तु राज्ञे समुपायनीकृत्य अपर

फलत्यहो लक्षगुण श्रमार्जितम् / ५४

रत्नयुगलञ्च क्रेतु न्यवेदयत् । अवदच्च मनुजनाथ ! व्यापारव्यसनिषु तु न कोऽपि समर्थोऽभूत् गृहीतु मूल्यदानेनाऽऽदातुञ्चेति ।

महाराजस्तु—

**अदृष्टपूर्वं ह्यनधीततत्त्वं, नाकर्णितोत्पत्तिगुणप्रभावम् ।**
**दिवाकराभं निशि कान्तिमत् तद् रत्नद्वयं वीक्ष्य सुविस्मितोऽभूत् ॥५३॥**
**तदीयभासा प्रतिभासितं तत् समस्तमालं भवनं विशालम् ।**
**निरीक्ष्य रत्नावलिकान्तिहानिं ग्लानिं भजन् न क्रयणे समर्थः ॥५४॥**

व्यचिन्तयच्च—अहो प्रस्फुरन्नवनवोद्भूतस्वप्रभापटलपराहतान्यसमस्तरत्ननिकरमेतदिति क्षुब्धमनाः तस्मिन्नद्भुतरत्नयुगले जातस्पृहोऽपि तन्मूल्यदाने ह्यसमर्थमेव स्वात्मानं मत्वा स्वराज्यकोषार्धभागोऽप्येतयोर्मूल्ये न पार्य्यते, कथं भवितुमर्हति क्रीणनमेनयोरिति पूर्वापरपर्य्यालोचनविनिश्चितनिजनिर्णयः प्रत्यावर्तयामास द्विजाय तदानीतरत्नत्रयम्-प्रत्युवाच च, नाहं कामये ब्राह्मणद्रव्यम् । निजकोषे रक्षणायापि नालम् । अतोऽप्यहं न कामये गृहीतु, यदेतन्त्रयमेवादाय किं करिष्यामि ? यदि हारनिर्माणपरिमाणानि भवेयू रत्नानि तर्ह्यपि गृहीतु क्रेतु वा मनः समुल्लसेत्—अतः प्रतिगृह्णाणैतद्रत्नद्वयमित्युक्त्वा द्विजवराय प्रत्यापर्यत् ।

द्विजस्तु—प्रहस्य पुनर्न्यवेदयत्—नरनाथ ! कियन्त्येतादृशान्यन्यानि समपेक्ष्यन्ते । आज्ञापयतु भवान् तावन्त्येवानयामि ।

नृपतिः—द्विजराज ! [ साश्चर्यम् ] कथमेव निःशङ्क ब्रवीषि ? किमेतानि धान्यराशिरिव स्वभाण्डागारे विविधभाण्डेषु सम्भृतानि सन्ति ? किमुत क्षेत्रे समुत्पन्नानि ? आहोस्वित् स्वकीयोद्याने समारोपितेषु पादपेषु समुद्भूतानि फलानीवावलग्नानि सन्ति ? अथवा भूमौ निखातानि विद्यन्ते । कथमेतादृशी सम्भूत् साधारणेवेय भवतस्तथाकथने प्रवृत्तिरिति ।

द्विजराज —

श्रुत्वैवं द्विजकुलसम्भवः स्मितास्यः
प्रोवाच प्रथितयशाः यशो वितन्वन् ।
राज्ञो वा बहुविधदानवीरतायाः
साफल्यं स्फुरितगुणं प्रकाशमेतुम् ॥५५॥

प्रजानाथ ! ह्यनाथं मां निजनाथ प्रकल्पयन् ।
स्वकृतश्रमसम्प्राप्ता दत्तवान् मे कपर्दिका ॥५६॥

ता एव साम्प्रतं गेहे मदीये वृक्षतां गताः ।
पुष्पिताः फलिता सन्ति बहुरत्नाः श्रमार्जिताः ॥५७॥

अहो भवांस्ताः समवेक्षितुं प्रभुः स्वकीयभूरिश्रमसाधिताः याः ।
नृपातिगं कृच्छ्रतमं च कर्म, कृत्वाऽददान्मे स्वपरिश्रमाप्ताः ॥५८॥

इत्थं द्विजवचः श्रुत्वा नृपो हर्षस्मयोल्लसन् ।
माहात्म्यं श्रमसाध्यानां द्रष्टुं तत्राऽगमत् स्वयम् ॥५९॥

नृपस्तत्र स्वयं गत्वा दृष्ट्वा चैतज्जगाद ह:—

नृपः—

अहो ! स्वकीयश्रमसर्जितानां, कपर्दिकानां वररूपमेतत् ।
सामान्यवृक्षा इव सम्फलन्ति श्रमार्जितं किं न करोति पुंसाम् ॥६०॥

द्विजेन्द्रबन्धो भवताऽद्य शिक्षा, दत्ताऽस्मदीयं खलु नेत्रयुग्मम् ।
उन्मीलितं ज्ञानघनेन, साक्षाद्दृष्टेन कर्मार्जितसद्धनेन ॥६१॥

द्विजवर —

विप्रोऽतिहृष्टः शुचिधन्यवादान् वितीर्य राज्ञेऽभिमतं जगाद ।
श्रमेण सर्वे समुपार्जयन्तु फलत्यहो लक्षगुणं श्रमार्जितम् ॥६२॥

स्वयं महाराजो दानवीरो वीरवरः, तन्मन्त्रिणः सर्वे समुपस्थिताः नगरनिवासिनः, सा चेयं द्विजराजसती—

सविस्मयोत्फुल्लविलोचनो जनः
समागतो ह्यद्भुतदर्शनोत्सुकः ।
अभूतपूर्वं नयनोत्सवं मुदा—
ह्युदीक्ष्य लोकातिगकर्म शर्म च ॥६३॥

मेने द्विजस्यैव तपःप्रभावं,
कश्चिन्नृपालश्रमजं फलं वा ।
द्विजाङ्गनायाः खलु भाग्यभूतिं—
परेऽप्यमन्यन्त सुरेन्द्रजालम् ॥६४॥

तदातिहृष्टोऽवनिपो द्विजेश्वरं
प्रपूज्य राज्ये स्वगुरुं ह्यकल्पयत् ।
तदाज्ञया घोषितवान् मुहुर्मुहु—
फलत्यहो लक्षगुणं श्रमार्जितम् ॥६५॥

—०—

# बलिष्ठो लभते जयम्

एकदा कस्मिंश्चिदधिष्ठाने सुकृतिनामा कश्चिद्दीनः कृषीबलः प्रतिवसतिस्म। सः सर्वदा स्वकीयक्षेत्रे भूरिपरिश्रमेण कृषिकर्म कुर्वन् तदुत्पन्नेनैवान्नेन स्वकुटुम्बपालन कुरुते स्म। तस्य त्रयः पुत्राः क्रमेण-क्षुब्धः, सकोची, प्रचण्डश्चेति नामान आसन्। एकदा समयवैपरीत्यात् तस्य क्षेत्रे तावत्परिमाण धान्य न समुत्पन्न यावताऽन्नेन सः सकलपरिवारस्य पोषणं कर्तुं पारयेत्। तदानी स्वपितुराज्ञा समादाय तस्य ज्येष्ठोऽङ्गजः क्षुब्धनामा कस्यचन महामहाधूर्तस्य परमलुब्धस्य (कणजुषः) वणिजो गृहे भृतिं (भृत्यवृत्ति) कर्तुंकाम पार्श्वस्थे (समीपस्थे) ग्रामे वसतः तस्य समीपमुपस्थायाब्रवीत्—

क्षुब्धः—भगवन्! एषु ग्रामेषु भवानेव सम्पन्नः श्रेष्ठी अतोऽहं ते सेवा कर्तुं समुपस्थितोऽस्मि, दीयता मे भृतिम।

वणिक्—अरे क्षुब्ध! यदि त्व मद्गृहे भृत्यतामवाप्तुकामश्चेत् समुद्यतस्तर्हि—शृणु, प्रात सूर्योदयात् प्रागेव यदाऽय कुक्कुटः कूजति, तत्कूजनेन सहैव सद्यः स्वविष्टरं परित्यज्य समुत्थाय सुसन्नद्धः सन् कार्ये सलग्नो भवेः, नान्यथा मद्गृहे भुवि वा भृतिं कर्तुं शक्ष्यसि, इति दृढं विचिन्त्य कार्ये प्रवृत्ति विधेहि, अन्यथा यथाऽऽयात गच्छेति।

क्षुब्धः—'आम्' सकल स्वीकरोमि । यथादेश करिष्ये ।

ततः प्रभृति स क्षुब्धः ( कृषीवलस्य ज्येष्ठपुत्र' ) स्वप्रतिज्ञानुसारं तस्य धूर्तवणिजो गृहे भृत्यता चरन् यथैव कुक्कुटः कूजति स्म सः सद्यः समुत्थाय स्वामिना निर्दिष्टे स्वव्यापारेऽप्रमत्तः सन् सलग्नो भवति स्म । सकल दिन प्रभातकालात् पूर्वमेव कुक्कुटकूजनकालात् आरभ्य पूर्वरात्रि पर्य्यन्त सर्वविध कार्यं सम्पादयन् अविच्छिन्नगङ्गाप्रवाहवत् स्वकार्य-सन्तति सवाहयन्-यथा कथञ्चित् चत्वारि दिनानि तु स व्यतीयाय । पञ्चमेऽहनि च महता घोरतरेण परिश्रमेण भूरिश्रान्त शिथिलसकल-देहबन्धसन्धिकः बहुयातयामा रात्रि लब्ध्वा क्षणिकसुख प्राप्य निशाया स्वदेहपीडामनुभवन्नलब्धनिद्रोऽपि कथमप्यन्तिम-प्रहरे, निशि क्षण भुग्नग्रीवः सङ्कुचितजानु निद्रावशमुपागतो न शुश्राव कुक्कुटकूजनम्, न वा स समुत्थाय कार्यसलग्नोऽप्यभवत् । तदा सूर्योदयावसरे स एव धूर्तो वणिक् तत्समीपमागत्य बोधयित्वा च त प्राह—

वणिक्—कथमरे ! नाधुनावधि स्वकार्ये प्रवृत्तोऽभू ? न वा कुक्कुटकूजितेन साक समुत्थितवान्, स्वप्रतिज्ञाभङ्गमप्यकरो । एता-दृशमप्रामाणिक मिथ्यावादिन सर्वदाऽलस, स्वकार्ये सयोज्य तु सकलमेव मे कार्य रसातल नेष्यामि, अतो नाह त्वा स्वगृहेऽधिक काल रक्षितु वाञ्छामि । गच्छ यथेष्ट स्वगृहमेव ।

इत्युक्त्वा स धूर्तो वणिक् त कृषीबलसुत स्वगृहान्निःसार्य न तस्मै तत्समुपार्जितभृतिवृत्तिरूपा मुद्रा तदधिकृतामपि प्राच्छत्, किं बहुना, स्फुटितामप्येका कपर्दिकामपि नाऽददात् । सः दीनो वराको रुदन्निव स्वगृह प्रत्यागतः । स च स्वगृहमागत्य स्वात्मना सह कृतदुर्व्यवहार वणिजः सर्वं श्रावयामास । तच्छ्रुत्वाऽन्यस्तस्य कृषीबलस्य द्वितीयः पुत्रः, तत्र गत्वा तस्यैव वणिजो गृहमुपाश्रित्य भृत्यत्वभावनया समागतो न्यवेदयत् त धूर्तवणिजम्—

द्वितीयः पुत्रः—

निधाय हृदि भृत्यत्वभावनां वृत्तिकामुकः।
दीयतां मे भृति देव! त्वत्सकाशमुपागत ॥१॥

वणिक् यथानियम तमपि तथैव प्रतिज्ञाबद्ध कृत्वा, तज्ज्येष्ठ-भ्रातृस्थाने तमप्यरक्षत्।

सोऽपि स्वप्रतिज्ञानुसार सङ्कोचीति॰ यथानामा तथागुणः' तथाकथितमिव सर्वं दिन कार्यं कुर्वाणः नित्यमेव कुक्कुटकूजनसहकृतमेव स्वकीयोत्थान कार्यप्रवृत्ति विधाय कठिनतमेन जनातिगेन परिश्रमेण सह सप्रवृत्तः कार्य कुर्वन् यथाकथञ्च रात्रेः द्वितीयप्रहरे एव विश्राम लब्ध्वा शयनाऽधिष्ठितो भवति स्म। पुन॰ प्रहरावशिष्टायामेव रजन्या समुत्थाय कार्यव्यापृतो भवन् कथ कथमपि सप्ताहमित काल व्यनैषीत्। सोऽप्येकदा घोरश्रमपरिश्रान्तो निद्रालिङ्गितो लब्धक्षणैकमात्रविश्रामसुखः समयोपरि विहित कुभाग्यप्रेरितमिव तत्ताम्रचूडकूजन नाशृणोत् न च समयोपरिसमुत्थातुमशक्नोत्। सहजमानवदेहव्यापिनीमस्वस्थतामनुभवन्न स स्वकार्यसलग्नोऽभूत्।

ततः प्रभाते प्रवृत्ते चारुणप्रकाशे समयात्प्रागेव तद्दुर्भाग्यमिव, क्षुधितवृक इव समापतितः स धूर्तराजाधमः।

तमपि परिश्रान्त रुग्ण वा निरीक्ष्यापि स॰ वणिक् स्वधूर्तताऽवगुणाऽगणितकुकर्मा सद्यः समीपमागत्य त प्रबोध्य-यथाऽभ्यास कुवागिषून् परिमुञ्चन् तत्पूर्वरक्षिततदग्रजमिव तमपि स्वकार्यात्पृथक् कृत्वा तस्मै कुवाक्यश्रावणातिरिक्तं किमपि न प्रायच्छत्। सोऽपि तथैव सङ्कोचविवशः स्वाग्रजवत् स्वगृहमुपागतः।

अहो, इत्थमुभावेव भ्रातरौ कृतसच्छ्रमौ।
निष्फलां भृत्यतां कृत्वा हताशौ गृहमागतौ।२॥

अलब्धपारिश्रमिकौ निजाग्रजौ,
भृशं परिम्लानमुखौ विलोक्य स ।
कनिष्ठबन्धु प्रतिशोधभावनां
विधाय चित्ते गतवान् प्रचण्डक ॥३॥

तं दुष्टकर्माणमलं नृशंसं
धूर्तं धनोन्मादविमुक्तबोधम् ।
दण्डेन तं शोधयितुं प्रचण्ड·
प्रचण्डकर्मागतभी प्रयात ॥४॥

समागतस्तत्र विराजते स्म
ग्रामे स धूर्त कृतदुष्टचेष्टः ।
आकारवेषै परिचोय लुब्धं
धूर्तं बभाषे विनयी प्रचण्ड ॥५॥

भो श्रेष्ठिवर्य ! त्वयि जातभक्तिः
कार्यानुरक्तिं च विलोक्य नैजाम् ।
वृत्ते समासक्तिवश करोमि,
त्वदीयसेवाभिरति प्रशस्ताम् ॥६॥

विधेहि सद्यः सदृशीं व्यवस्थां,
स्वस्थानगां क्लिष्टतमामपोहे ।
निधेहि दीने मयि ते दयालो !
दयादृशं, स्वाश्रयदानधर्मैः ॥७॥

श्रुत्वाऽतिहर्षेण विसृष्टहासः
श्वासाऽ-(प्राणाऽ) धिकं कर्म विधातुकामम् ।
कामं विविच्य, प्रकृतेः कठोरां
स धूर्तराजस्तमुवाच वाचम् ॥८॥

धूर्तो वणिक्—किमरे ! प्रचण्ड ! त्व मे भृत्यत्वं कामयसे ? पश्य यदि त्व भृत्यता स्वीकुरुषे तर्हि मद्गृहे स्थितस्यास्य कुक्कुटस्य कूजन-

वेलाया तद्वाण्या सहैव ते विष्टरपरित्यागो भवितव्य । सद्य समुत्थाय च कार्ये प्रवृत्तिर्विधातव्येति । नान्यथा त्वमपि क्षणमेकमपि मे गृहे स्थातु शक्ष्यसि नो वा भृतिका प्राप्तु साधिकारो भविष्यसीति । अतः प्रतिजानासि चेत् यत् ताम्रचूडस्याद्याक्रोशन कूजन)सहकृतामेव ततः कालादारभ्यैव निर्दिष्टसमयपर्य्यन्त निरवच्छिन्ना कार्यप्रवृत्ति विधास्यामीति । स्वीकरोषि चेत् कथय कियत् ते वेतन भविष्यति, प्रतिमास, प्रतिवर्षं, प्रतिपक्षं प्रतिदिन वेति ।

प्रचण्ड –श्रेष्ठिवर्य ! सर्वमिद भवदुक्त स्वीकरोमि वेतन तु नाधिक वाञ्छामि । जानामि च श्रेष्ठिनो वणिजः प्राय बद्धमुष्टिका प्रभवन्ति । अत द्रव्यमय किञ्चिदपि किमपि वेतन न कामये अहन्तु प्रत्यह कठिना-त्कठिनतममपि भवदुक्त कार्य सार्वकालिकं सम्पादयन् द्विसन्ध्य स्वोदर भरणमात्रभोजन - शरीराच्छादनमात्र वसन लब्ध्वा सर्वविधा त्वदाज्ञा पालयन् वत्सरान्ते सकृत् त्वदङ्गे एकमात्रं मुष्टिकाप्रहार, तथा भवद्धर्म-पत्न्याः शरीरे केवल स्वाङ्गुष्ठतर्जनीभ्या पिपीलिकासन्दशनमिव चर्मोत्कोचनमेकवारमेव विधास्यामीत्येतावदेव मे वेतनोपभोगविधानम् । नातः पर किमप्यधिक कामये द्रव्यादिकम् ।

श्रेष्ठी तु महानेव कृपण आसीत् परमलुब्ध प्रत्यक्षोदाहरणभूत-श्चास्या "गच्छेद्वा देहचर्मांशो मा गच्छेत्ताम्रखण्डकः" इति जनश्रुतेः । स स्वमनस्यचिन्तयत् - यदय विक्षिप्त इव प्रतिभाति । विचित्रः खल्वयम् । वर्षपर्य्यन्तमय मद्गृहस्थ सर्वविध मदादिष्टञ्च कार्य प्रतिदिन कुक्कुटकूजनादारभ्य प्रथमयामपर्य्यन्त निशायाः कार्यमप्यविच्छिन्नरूपेण कर्तु कामयते, वेतनं न किमपि ग्रहीष्यति । युवा पीवा दृढाङ्गो बलिष्ठ-श्चेति सम्यक् सम्पादयिष्यति कार्यम् । वर्षान्ते केवल मद्देहोपरि मुष्टिका प्रहार-धर्मपत्न्याः श्रेष्ठान्याः शरीरे च केवल पिपीलिकेव चुटुकादशनमात्र करिष्यति तेन च का नौ हानिः । ततोऽपि वर्षपर्यन्तावधिकाले तु न जाने कतिवारमय श्रान्तः क्लान्तो रुग्णो, व्यथितः सुतरा पलायमानः

अस्मदादिष्टकठिनतमकार्यसलगयितो मुहुर्मुहुः समयासमयेऽपि विषमे दुर्गमे, रौद्रतमे वा स्थाने गन्तु शयितु प्रेरितो न जाने कदैव सकल कार्यं त्यक्त्वा सद्यः पलायिष्यते, अतो यावत्तिष्ठति तावत्तु कार्यं कारयितु-मय रक्षणीय एव विक्षिप्तमतिरिति विचिन्त्य स वणिक् त निःशुल्कदास-मिव मत्वा स्वमनसि प्रसन्न प्रचण्डोक्ता प्रतिज्ञामपि स्वीकृत्य तत्क्षणादेव कार्ये नियोजयामास ।

प्रचण्डोऽपि स्वाभिलषित सद्य सिद्धमिव मत्वा सर्वं तदुक्तमुररी-कृत्य तदादिष्टे कार्ये प्रवृत्तो ह्यप्रमत्त स्वलक्ष्यसाधन तस्मिन् दिने तु तत्कथनानुरूप सर्व दिन सकल सर्वविध कार्य कुर्वन् श्रेष्ठिगृह प्रत्यागतः सायन्तनमशन रात्रौ प्रथमप्रहरे समाप्ते सति गृहीत्वा भुक्त्वा च यदा शयनार्थ स्वविष्टर प्रति समागत तदा तद्गृहस्थ कुक्कुट गृहीत्वा, तस्य कण्ठ सुदृढयैकया रज्ज्वा समन्ताद्बबन्ध । तञ्चैकान्ते दूरतरे स्थाने प्रक्षिप्य निःशङ्कमशेत ।

परेद्यु निबद्धगल कुक्कुटो न कूजयितुमशकत् । स च सूर्योदयपर्य्यन्त ससुख सुष्वाप । सूर्योदयानन्तर स्वयमेव स्वेच्छया समुत्थाय श्रेष्ठिन समीप गत्वा समुवाच [ ततः पूर्वमेव निबद्धकण्ठ त कुक्कुट मुक्त्वा क्षेत्रे गतजीवितं प्राक्षिपत् ] भगवन् ! अद्य न जाने सः क्व गत कथ न चुक्रोश, एतावानेव समयो जातः प्रतीक्षमाणस्य मे, सम्प्रति तु सूर्योदयोऽपि जात । कार्यं कर्तु यामि क्षेत्र । अस्ति तत्रे-तस्ततो विस्तृत भूरि कार्यमवशिष्टं, तद् गत्वा सम्पादयामि तावत् अतः शीघ्र प्रातरशनमादाय दीयताम् ।। इति ।।

श्रुत्वैतच्छ्रेष्ठी किञ्चिद्विस्मितो न जानाति स्म तद्रहस्यम् । यत् कथं न कुक्कुटश्चुकूजेति । स चोक्तवान् - तिष्ठ सम्प्रति, आवा हि नगरं प्रति चलावः ।

कृपणः स वणिक् नगर गत्वा ततोऽपर ताम्रचूडमानेतु वाञ्छति। यदा तौ नगर प्रति प्रस्थितौ तदा मार्गे एव स्वात्मसम्मुखमायान्तमेकं महाबलशालिन बलीवर्दं पश्यतः स्म। य पञ्च युवान पुरुषाः स्थूलस्थूलाभिः दृढतररज्जुभिर्बध्वाऽऽनयन्तिस्म। निभृत निगडितोऽपि स बलीवर्दः पञ्चैव तान् पुरुषान् समाकर्षन् यथेच्छमितस्ततो धावति स्म। तेऽपि यावच्छक्ति त बलवन्त महावृषभम् अग्रतः, पृष्ठतः पार्श्वतश्च बद्ध्वा समाकर्षन्तः तेन सह मल्लयुद्धमिव कुर्वन्त, तेन च यथेच्छमाकृष्टाः, रज्ज्वाकर्षणविकर्षणैर्नष्टप्रायबाहुबलाः श्लथितकरसम्पुटाः भृश दूयमाना आसन्। न ते पञ्चापि तमेक बलिष्ठ वृषभ स्ववशीकर्तु प्रभवोऽभवन्। इति सर्व विलोक्य स्वस्वामिना वणिजा सह प्रचलन् प्रचण्डः तान् बलीवर्दरक्षकान् पप्रच्छ--

प्रचण्डः—किम्भोः! महापुरुषाः! कथमेतावन्तः खिन्नाः यूयम्? किमर्थञ्च इत्थमेताभिः पञ्चभिः रज्जुभिः समन्तान् निबद्धोऽय पशुः पञ्चभिरेव भवद्भिर्न साध्यते सम्यगादेष्टु सुशासितु स्वोद्दिष्टे वा वर्त्मनि चालयितु? कुत एवायमानीतः कुत्र वा नीयते। कथमेवं सर्वं एव भवन्तो दुःखश्रमकर्षिताः स्वेदधराः समाकुलितवदनाः शोणितनयनाः व्याकुला इव प्रतीयन्ते। कि कर्तुं, किमाचरितु, कामयन्ते, नास्ति चेत् गोप्य, प्रकटयन्तु।

ते पुरुषाः—भगवन्! अय बलीवर्दः महान्, धृष्टदुष्टः। न गणयत्यस्मान्। वय पञ्चैवैन दृढ रज्जुभिर्बद्ध्वा यथा कथञ्चित् केनापि प्रकारेण नयामः। तथाप्यय नः सकलान् न गणयति मृत्पिण्डासमानानेव मनुते। सर्वान् स्वात्मना सह समाकृष्य यथेच्छमितस्ततो धावति। वयञ्चैन कथं कथमपि महाहट्टपर्य्यन्त नीत्वा, तत्र यदि क्रेतारो मिलिष्यन्ति तदा त्वेनं विक्रेष्यामहे नान्यथा पुनरेन गृहमानेष्यामः। अपि तु तत्रैव कस्मैचित् कृषीबलायैन दत्वा स्वसकटमपनेष्यामः। मोचयिष्यामः स्वात्मानमस्माद्राक्षसादिति।

प्रचण्ड.——

तच्छ्रुत्वा वचन तेषा, विहसन्प्रत्युवाचह ।
मुष्टिकैका प्रहारेण विस्मरिष्यत्युपद्रवम् ॥६॥

इत्युक्त्वा स प्रचण्डो बलीवर्दसमीप गत्वा करेणैकेन तन्मुखस्था रज्जुं गृहीत्वा द्वितीयकरमुष्टिकया तस्य घोणे प्रहारमकरोत् । तेन च सः महाबलिष्ठोऽपि वृषभोऽसृक् पुरीषञ्च समुत्सृजन् परिभ्रमश्च चतुष्पाद-मुन्नतीकृतोर्ध्वमुखनासापुट परिभ्रमच्चक्षुः पपात पृथिव्यामाघातमूर्च्छित. ।

तद्दृष्ट्वा तत्स्वामी वणिक्, वृषभनायकाः पुरुषा' अन्ये तत्कर्मदर्शकाः परमविस्मयोत्फुल्लदृश प्रशसन्तश्च त, कोऽप्यासुरजीव इति मन्वानाः गता । सोऽपि प्रचण्डस्वामी भयचकितस्त प्रत्यैक्षत । किञ्चिदेवाग्रे यदा ते तत्स्थानात् गता' तदानीमेवैक वनमहिष बाणैकविद्धमेकपादं स्खलद्गतिकमनुसरन्तौ सम्मुखमायान्तौ व्याधावपश्यत् वणिग्वरसहितः प्रचण्ड. । तावपि तद्वनमहिष लक्ष्यीकृत्य परस्पर विवदन्तौ अय मम बाणेन विद्धो न तवेति मुष्टामुष्टि-दण्डादण्डि-केशाकेशि इति मिथो मर्दयन्तौ न युद्धविराममभजताम् । वणिज, प्रचण्डेनापि सम्बोधितौ तौ यदा नामन्येता तयोर्वचः, तदा प्रचण्ड सहसोपसृत्य स्वकरयुगेन एकेनैकमप-रेणापर निगृह्य पृथक् पृथक् कृत्वाऽपृच्छत्—'किमर्थं वामिह प्रवृत्तोऽय युद्धकलह' इति । शान्तौ भवतम् अन्यथा ममैकेनैव करतलताडनेन जगदपीद विस्मरिष्यथः ।

तावपि व्याधौ स्वपृथक्करणकाले एव प्रचण्डकरस्पर्शेनैव खरतर-स्पर्शेनासह्येन, अनुमिततद्बलौ शान्तो भूत्वावृत्तान्त वनमहिषाखेटमय श्रावयामासतु' । श्रुत्वा च तयोर्वृत्तान्तम्——

प्रचण्ड.——तर्हि किम् काङ्क्षेते भवन्तौ ।

एको व्याध. —अह तु मद्बाणविद्धस्यास्य मास काङ्क्षे ।

द्वितीयो व्याध.——अह तु केवलमस्य त्वचमेवेति ।

प्रचण्ड.--अस्तु-गृह्णीतामुभावेव स्व-स्वाभिलषित वस्तु ।

इत्युक्त्वा-एकेनैव मुष्टिकाप्रहारेण त महाकाय वनमहिष भूमौ-पातयामास । मस्तकोपरि मुष्टिकाप्रहारेण विवृत्तनेत्रो विस्फारितमुखो नि सारितजिह्व. सद्य प्राणानत्यजत् वनमहिषः । इति दृष्ट्वा व्याधावपि भयत्रस्तावभूताम् । तत. सः [ प्रचण्ड. ] स्वाङ्गुष्ठतर्जन्यो सन्दशयन्त-मिव कृत्वा पिपीलिकादशनमिव नखयुगलेन तत्त्वच निगृह्य-एकेनैवाकर्ष-णेन तत्त्वच नि शेसा मुखत. पादान्ता कदलीफलवल्कलमिव निष्कुशन् समुत्पाट्य च तयोरग्रे प्राक्षिपत् । उत्तवाश्व यथेष्ट स्व स्व वस्तु गृहीत्वा निराजयौ गृह गच्छतम् ।

इत्थ स्वचक्षुषो. समक्षमेवैतादृश महाभयकर पुरुषातिग कर्म दृष्ट्वा स. धूर्तो वणिग्वर. प्रचण्डमिम महान्त राक्षसमेव मत्वा, स्वकृता च मृत्यरक्षणवेलाया प्रचण्डप्रस्तुतभृतिकामयी वेतनस्वरूपा "स्वमस्तोपरि मुष्टिकापात श्रेष्ठाङ्गा: शरीरे च पिपीलिकादशनमिव निष्कुशितरूपा" प्रतिज्ञा स्मृत्वा सञ्जातसर्वाङ्गरोमाञ्च विवृद्धहृदयगतिक. भयभीतः सद्यः समुद्भूतप्रस्वेदपरिप्लुतदेहः परिभ्रमन्तमिव सकललोक पादयोर-धस्तान्निर्गतमिव भूवलय मन्वानो, मूर्च्छित इव रुद्धगतिकः सहसा भूमौ स्थितोऽभूत् । स हि सर्व नगरगमन, तत्र गत्वा कुक्कुटानयन विस्मृतवान् । महता भयेन व्याकुल स्वगृहाभिमुखमेव प्रत्याजिगमिषु' प्रोवाच प्रचण्डम् । वत्स ! प्रचण्ड ! कस्मिंश्चिदन्यस्मिन् दिने नगर चलिष्यावः अद्य तु नावसरः सम्प्रति गृहगमनमेव श्रेय । आगच्छेत्युक्त्वा स्वगृहमागच्छेताम् वणिक् प्रचण्डश्चेति--स्वामिभृत्यौ । शीघ्र गृहाभ्यन्तर प्रविष्टोऽभूद वणिक् ।

धूर्तो वणिक् स्वभार्यामाहूय आर्ये ! सत्वरमायाहीति ब्रुवन् सञ्जातसर्वाङ्गवेपथुः स्खलितवचनो ह्यव्यवस्थितपादप्रक्षेपः प्रस्वेदप्लु-ताङ्ग. प्रोवाच वणिक् -- देवि ! हा हा

हा हा हन्त हताः स्म एव सुमहान् यक्षोऽथवा राक्षसो
दैत्यो दानव एव कोऽपि जगतां संहारकारी यमः।
भीमो वा रुधिरौघपाननिरतः प्रत्यागतो भूतले
नायं मानुष एव देवि! निलयाविष्टः प्रचण्डोऽसुरः ॥९॥

प्रत्यक्षमेव मयकाऽद्य निरीक्षितं भोः,
लोकातिगं ह्यतिनृशंसमनार्यकर्म।
एकोऽस्य मुष्टिकमहाघनसंप्रहारः
प्राणापहो वनपशोर्महिषस्य सद्य ॥१०॥

तर्जन्यङ्गुष्ठसन्दंशगता निष्कुशिना त्वचा।
येनाऽऽकृष्टा शरीरे तु पशोरपि न सुस्थिरा ॥११॥

(रुदन्निव) हा, हा, देवि, देवि किमह कथयामि नाय मनुष्य, एषोऽस्माक भृत्य प्रचण्डः। अयन्त्वस्माक प्राणापहारक सकललोकलीला-सहारक. एवेति, समागतः सुप्रविष्ट अरे! अस्माभिरेव गृहे प्रवेशितो राक्षस किमधुना कुर्मः, हा हा।

तत्पत्नी—नाथ! कथमेव भ्रान्त, कथमेव व्याकुलितचेताः? किमु वाऽस्वस्थ. आर्यपुत्र, आहोस्वित् जाता मस्तिष्कविकृति? कथ न प्रकृतिस्थो भवान्। किमरे! विहितमनेन दुरात्मना? क्षण धैर्यं धृत्वा प्रकृतिस्थो भवत्वार्यपुत्रः। विश्राम्यता क्षणम्। आलम्ब्यता धैर्यम्। उपास्यता शान्ति। नाथ! भजस्व प्रकृतिम्। हृदयमवलम्ब्य, भयमपहाय विश्राम कुरु, इति वदन्ती वणिग्भार्या त करावलम्बनेन पर्य्यङ्के सस्थाप्य व्यजनञ्च धृत्वा शनै. शनै. वीजयति स्म। वस्त्राञ्चलेन च तन्मुखमण्डले मण्डनायमानान् भयसत्रासनमुत्पन्नान् प्रस्वेदबिन्दून् सम्प्रोञ्छ्य मधुरालापैश्च त सम्बोध्य समाश्वासयति स्म।

वणिग्वरः — स्वभार्याविहितोपचारसम्भारैर्लब्धक्षणिकशान्तिर्धृत्वा च धैर्यम्, समालम्ब्य च भयसन्त्रस्त हृदयम्, कथ कथमपि शनै

शनैः चकित-स्तम्भित-समुद्वेजित-प्रोच्छलित-स्खलित-निपतित-विगलित-हृल्लोचनचेतोवाक्पादविन्यास प्रारभत निजनयनालोकिततात्कालिक-घटनाचक्रचक्रवातोच्छ्रायवर्णनम्। देवि! महाननर्थो जात, मया मूढेनाधमेन स्वयमेवैन भृत्य विधाय स्वगृहोपरिरक्षता स्वात्मनो भवत्याश्च प्राणा अनेन सह विहितप्रतिज्ञावैश्वानरे स्वाहुतय कृता ।

वणिग्भार्या—नाथ! किमेव प्रलपति भवान्! कथ कथमिव!

वणिक्—प्रिये! यदाऽय भृत्यतार्थ अस्मद्गृहे भृत्यो भूत्वा सेवा कर्तुकामो मत्सकाशमुपागत. सेवाकाठिन्यमपि प्रदर्शयता, एतत्पूर्वमपि भृत्यद्वयस्यापि चतु पञ्चदिनावधिकी सेवा विहाय प्रस्थितस्य परिस्थितिरपि सूचिता सर्व मद्वचनानुसार कठिनात्कठिनतममपि कार्य कर्तु न मनागपि प्रकम्पितोऽभूदय पिशाच' प्रचण्ड, तदा पुनरस्य वेतनादिविषये मया पृष्ट प्रोक्तवान् मा, देव! नाह द्रव्यमय किमपि वेतन वाञ्छामि, अहन्तु केवल, एकसवत्सरानन्तर - तव मस्तके मुष्टिकाप्रहारमेवैकवार करिष्ये तत तव पत्न्याः शरीरे केवल तर्जन्यङ्गुष्ठाभ्या काकतुण्डाकारमयी चुटिका कृत्वा पिपीलिकासदशनमिव स्वल्प चर्मोत्कोचन निष्कुशन (निष्कोशन) करिष्ये, नातः पर किमपि वेतन काङ्क्षे इति। ततोऽहमेन विक्षिप्तोऽयमिति मत्वा मुष्टिकाप्रहार चुटुकिकया निष्कोशनञ्च सामान्यमेव मत्वा कथनमस्य स्वीकृत मया। मत्कथित च सेवाप्रकार कर्म वाऽनेकविधमप्यय स्वीचकार। इत्थमुभावेव परस्पर बद्धप्रतिज्ञावभूताम्। परन्तु हा हा हा देवि! अद्यतनी प्रत्यक्षदृष्टा घटना स्मार स्मार तु न मे मानस स्वस्थता भजते। हा! हतोऽस्मि—प्रिये, हा प्राणाधिके! त्वमप्यकालमेव मया मूढेन कालकवलीकारिता। स्वहस्तेनैव व्याघ्रमुखे निपातिता। भद्रे! यद्यय भृत्यः, इत पर गृहे स्थास्यति तर्हि वर्षाभ्यन्तरे एवावयोः प्राणान् नि सन्देहमपनेष्यति—मुग्धे! अहमपि मृतः त्वमपि समर्पितजीवनैवेति निश्चयीकुरु। अहो, कुतोऽय समुपागतः समुत्पातः ह्युपप्लवो वा। [स्वमानसे प्रचण्ड स्मृत्वा] अरे! रे! यमराज!

मुञ्च, मुञ्चास्मान्। हा, हा नाथ! साम्ब शिव! मृत्युञ्जय! प्रभञ्जय, प्रभञ्जनबलमेन। महाकाल! कवलयैन विकरालकालकङ्का-लिनम्। [ प्रचण्ड सम्मुख एव स्थितमिव मत्वा प्रोवाच वणिक्—] अहो दुरात्मन्! कथकार त्वत्तो वयमभय लप्स्यामहे।

वणिक् पत्नी—नाथ! श्रेष्ठिवर्य! स्वस्थो भवतु भवान्, क्वास्त्यत्र प्रचण्डः? किमत्याहितमनेन पापेन।

वणिक्—(किञ्चिद्धैर्यं धृत्वा) देवी कथयामि त्वा—

अद्य यदाऽहमनेन सह नगर प्रति प्रस्थित तदा मार्गे महानेको महासत्त्व पुष्टो हृष्टश्च बलीवर्दो दृष्टः य पञ्चमहाकायाः पुरुषा परितो रज्जुभिः सम्यक् निगडय्य-अग्रतः पृष्ठतः पार्श्वत. निबध्य पूर्णशक्त्या विकर्षन्तोऽपि न त स्ववशीकर्तुं प्रभवोऽभवन् तमेव महावृषभमेकेनैव स्वमुष्टिकाप्रहारेण गतप्राणमिव कृत्वा भूमावपातयत्। ततः किञ्चिदेव दूरे महाकाय मत्तवनमहिषमपि तथैव निजैकमुष्टिकाघातेन लोकान्तर-सञ्चारिणमकरोत्। ततश्च तस्याखेटकारिणौ विवदन्तौ व्याधौ विलोक्य परस्पर घोर युद्ध प्रकुर्वन्तौ एकेनैव पाणिना पृथक्-पृथक कृत्वा स्तब्धा-वकरोत्। तयोश्च विवादग्रस्त विषय यत् तस्य वनमहिषस्य त्वचमेकः मास चापर. काङ्क्षते इति श्रुत्वा झटिति प्रचण्ड स्वाङ्गुष्ठतर्जन्योः काकचञ्च्वाकारा चुटुकिका निर्माय पिपीलिकादशनवत् वनमहिषस्य चर्म गृहीत्वा सकृदाकर्षणेनैव सर्वां मुखत पादान्ता त्वच निष्काश्य प्राक्षिपत्। प्रोक्तवाश्च, उत्थाप्यता स्वस्वाभिलषित त्वङ्मासादिक-मस्येति। तस्मादेव कालादह भयत्रस्तो नाशक्नवम् सम्यग्दिग्ज्ञानमपि कर्तुम्। प्रिये! आयास्यति सपद्येव स तु वर्षान्त काल. कालभूत। स्वकृतप्रतिज्ञानुसार यदाऽय मे शिरसि स्वमुष्टिकाघात विधास्यति तदा तु सद्यस्तिलशश्चूर्णितो मे देहो भूतलतलनिलीन एव भविष्यति। हा, हन्त! कि करोम्यधुना क्व यामि। अस्तु, भवतु नाम मम त्वेतादृशी दशा किन्तु महत्कष्टतरन्त्विदमेव यदय महाकाल. यमदंष्ट्रायमाणया ह्यस्या-

ङ्गुष्ठतर्जनीविहितया सन्दशिकया तव कोमलकमलमृदुलगात्रावच्छादिनी मृदुतमा त्वचमुत्कोचयिष्यति सकृदाकृक्ष्यति वा, तदानीन्तु ते निःशेषा शारीरिका त्वक् कदलीफलवल्कलमिव क्षिप्रमेव तद्धस्तगता भविष्यति न भविष्यति च भवती तत परमस्मिन्नसारे ससारे।

श्रुत्वैतत् सैव वणिग्भार्या या स्वकान्त धैर्यधारणाय समाश्वासनाय च प्रैरयत्-स्वयमपि भीम कर्म तस्याकर्ण्य समनुभविष्यमाणा च स्वकीया श्रेष्ठिनश्चासन्नभविष्यत्काले प्रचण्डद्वारा विहिता करिष्यमाणा वा दशा विचिन्त्य चतुर्गुणितस्पन्दनमयहृदयगतिका भृश भयभीता महावाताहता कदलीव वेपतेस्म। सकृदेव विशुष्यत्तालुमूला समवरुद्धकण्ठस्वरा सर्वांग-सञ्जातप्रस्वेदधाराप्रवाहप्रवाहितेव वदनद्युतिका, महाराहुग्रस्तसकलकलः कलाधर इव ग्लपितवदना, सभयचकिता मृगीवास्थिरनयना कथ कथमपि ह्यविरलजलदकालानुकारिणी स्रवदश्रुधारे चक्षुषी शाटिकाञ्चलेन प्रोञ्छन्तीव स्खलितपदा वाचमूचे--

वणिग्भार्या--हा-हा सत्यमेव तर्हि वय हताः स्म। नाथ! अयन्तु साक्षात्तर्हि यमराजस्याग्रजन्मा प्रतिभाति। भगवन्! एतादृशस्तु न रक्षणीयोऽस्माभिर्गृहे। अरे! रे! एष तु पर्य्यङ्कगत एव महाकालकूट-दष्ट्र सर्पः। कि वाऽयन्तु बाह्वन्तरालसमापतितो महाभुजङ्गम। कथ-मयमस्मद्गृहादपसारणीयो भवेत्। कथमजानतैव भवता समाहूतोऽय यमदूतः। हा हा नाथ! मार्कण्डेयरक्षणदक्ष दक्षयज्ञविध्वसकर वरत्रिशूल-धर भक्तवत्सल महाकालेश्वर! त्राहि त्राहि नौ ते चरणशरणमुपगतौ दीनदम्पती महामहाघोरतरादस्माद् यमसकटात्। अहो देवाधिदेव! भविष्यति कदा ह्येतस्मादन्तकान्मुक्तिः, मुक्तिर्वाऽस्मादसारात्ससारात्, मुक्तिश्चाथ जन्मजन्मान्तरीयकर्मणा भोगात्। इति चिन्तयन्ती वणि-ग्भार्या-साक्षाद्यमराजावतारप्रसारिता कल्पनामयी नारकीययातनामिवा-नुभूय मूर्च्छितेव समभवत् तदानी निद्राङ्कगता, वणिग्वरोऽपि तया सहैव निद्रावशमुपगतः।

अथ प्रभाते यदा वणिक्पत्नी समुदतिष्ठत्, तदा सा किंचिदाश्वस्ता आसीत्, यतो हि सा त प्रचण्ड स्वशत्रुभूत नाशयितुमेकमुपाय व्यचिन्तयत्-येन स स्वयमेव मृतो भवेत् तस्या तत्पत्युश्च प्राणा सुरक्षिता भवेयु । सहसैव सा सद्यः प्रसादसुमुखी स्वकान्तसमीपमुपसृत्य स्वचिन्तितमुपाय तमश्रावयत् । सोऽपि पप्रच्छ ताम्—

कणजुट् वणिजः - को नाम चिन्तितः स उपायस्त्वयेति ?

वणिक्पत्नी – नाथ ! अद्याय साय यदा गवा गणमानीय गोष्ठे प्रवेक्ष्यति तदा सः समाहूय समादेश्यः यत्—त्वयाऽद्य मे सा श्यामा धेनुः कथ नानीता ? क्व सा वने विस्मृत्य अन्या वा समानीय गोष्ठे प्रवेशिता सैव मे प्रिया भूरिदुग्धा नालोक्यते, हन्त रे ! पापात्मन् ! किमिदमाचरितम्, कथमत्याहित कर्म । सैव मे धेनु सकलकुटुम्बपालिनी, विशिष्टा सर्वतो वरिष्ठाऽऽसीत् । तामन्विष्याधुनैव सकल वन पर्य्यालोच्य तामन्विष्य समान्य ततस्त्वया सायन्तनमशन करणीयमिति ।

इत्थमेव स्वभार्यया सह सम्मन्त्र्य वणिक्वरोऽपि समयोचित परामर्शमुपश्रुत्य विचिन्त्य समस्तरात्रौ तस्मिन् महाभयावहे त्रिविधमहाकायहिंसकजन्तुसमाकुले महामदान्ध-गन्धगजभीमे वृकमहावराहविकटपरिसरे सकलसाधारणजनाप्रवेश्ये, अनेकभूतप्रेतबहुलपादपपुञ्जनिविडनिकुञ्जे सघने वने रात्रौ सर्वत सिंहव्याघ्रखड्गभल्लकादिसञ्चाररौद्रतमे परिभ्रमन् गामन्वेष्टुकाम सहसैव कस्यचन हिंसकजन्तो मुखकुहरे निपतित सद्यस्तस्याहारो भविष्यति, प्रभविष्यति वा यमातिथिः मुक्तौ वा भविष्यावोऽस्माद्दुरवग्रहात् । इति ।

यदा च स. प्रचण्ड सर्वदैव गोचारणकर्मणि नियुक्त सर्व दिन वने परिभ्रमन् गाश्चारयन् अप्रमत्ततया च गोसेवामेव स्वकर्तव्य मन्वानः अतीव रमणीये मृदुलशष्पपरिराजिते सजलप्रदेशे ताश्चारयन् हृष्टा पुष्टास्तृप्ताश्च ता कारयित्वा ( कृत्वा वा ) स्वय सर्वा सकलय्य

मदमन्थरगत्या प्रचलन्ती परिनादितस्वस्वग्रीवावलम्बितघण्टिकाः, घण्टिकास्वनेन परिपूरिताकर्णरन्ध्रा समायान्ती मोदमाना सायकाले स्वगोष्ठ प्रति धावन्ती स्ववत्साना कृते प्रस्रवत्पय पूरा ऊधोभारेण मन्थरगती दर्शनीया धेनू समानीय गोष्ठे यथास्थान ता प्रवेश्य वत्सान् स्तन्यपानोत्सुकान् नवजातान् स्व-स्वमातृस्तनान् पाययित्वा तानप्यति-स्नेहेन लालयित्वा यथास्थान तान् सम्यङ् निबध्य, सान्ध्यकालिक भोजन लब्धुकाम क्षुधित स प्रचण्डो यदा वणिजो गृह प्रविष्ट खाद्यान्नञ्चा-याचत, तदा स धूर्तो वणिक् स्वपत्न्या परामर्शानुसार, गतायामपि प्रहरन्मिताया निशि कृतप्रातरशन परमक्षुधित पूर्ण परिश्रान्त क्लान्तमपि समायान्त भोजनेच्छु त याचमान प्रचण्डमालोक्यैवात्युद्दण्ड सन् सक्रोधमुच्चैर्निर्भर्त्सयन् तमित्थ समुपालब्धवान्—

वणिक्—किमरे ! दुरात्मन् ! दुष्ट ! समुपेक्षाशील ! एतावती रात्रि विहायाऽपि प्रमत्त इव समागतः । क्वाऽस्ति सा मे कामधेनु सकलगोकुल मण्डनभूता सकृत्प्रसूता प्रभूतपयःस्राविणी, या हि मे समस्त कुटुम्ब स्वदुग्धेन सन्तर्पयति स्म, आ ोच्च गृहपालिनी गोष्ठगौरववाहिनी प्रवाहिनी पय पूरस्य, कुत्र सा परित्यक्ता तत्र महाहिंस्रजन्तुघो वने ? न दृष्टा सा मया बहुवार विलोकिताऽपि गोष्ठे । अत सर्वत

**"प्रथमं तां समन्विष्य निःशेषं वनमादितः ।**
**गामाद:य समागच्छ, ततो भुंक्ष्व यथासुखम् ॥१२॥**

तामानीय मा प्रदर्शय, गोष्ठे वा यथास्थान प्रवेशय ततः सुख स्वपिहि । सम्प्रति गच्छ, मा कुरु विलम्बम् । इति क्षुधार्तमपि त वन गन्तु समादिदेश निर्दयो धूर्तो दुष्ट' ।

सोऽपि स्वा प्रतिज्ञा परिपालयन् दुष्टकर्माण त लज्जयितु तस्य च दुश्चेष्टाया फल च प्रदर्शयितु स्वात्मनोऽप्रधृष्य महासत्त्वता वा प्रकटयितु सद्यः एव विनैव भोज्यं गृहागतोऽपि वने चङ्क्रमणाय प्रस्थित. । अमन्यत

च स्वकीयमेवापराध। अकरोच्च तत्कथनोपरि विश्वासम्। नापश्यच्च कल्पनामयीमदृष्टपूर्वां ना धेनु। पुनरपि सकृद्गोष्ठेऽपि विलोकनाय न गतवान्। स तु वने एव निरीक्षितु ता प्रातिष्ठत्।

अभितो वन भ्रमन् यदा स नापश्यत्तत्र ता वणिजा एव मिथ्या प्रकल्पिता धेनुम्, तदा स पर्वतकन्दरासमीप गतः। तत्रापि सकलामधित्यका नि शेषाञ्चोपत्यकामन्विष्य, अनुपलब्धधेनुक स स्वगृह प्रत्यावर्तितोऽभूत्। तदा मध्ये मार्गंगच्छता तेन प्रचण्डेन सम्मुखागत कश्चनैको भल्लूको दृष्ट। नीरन्ध्रे निशीथान्धकारे केवल लोमश श्यामवर्णं लघुकाय सर्वमेव त नात्युन्नता स्थूला बहुक्षीरा तामेव श्यामा मत्वा

क्रोधाविष्टः क्षुधाक्लिष्टः पिष्टः पापेन दुर्धिया।
वणिजा प्रेषितोऽधृष्टोऽनिष्टं भल्लूकमानयत् ॥१३॥

बलादाक्रम्य तं धृत्वा, बध्वाऽस्पष्टाकृतिश्च तम्।
कर्णौगृहीत्वा भल्लूकं ताडयन् लगुडेन सः ॥१४॥

कर्णौ समाकृष्य निगृह्य दोर्भ्यां
दण्डेन सन्ताडय वदंश्च गालीम्।
महान्धकारेऽतिभयानकं तं
भल्लूकमावेशयदत्र गोष्ठे ॥१५॥

भ्रमेण तं गामिह मन्यमानः
प्रवेश्य गोष्ठे क्षुधितश्च दीनः॥
यामैकमात्रां निशमीक्षमाणः
समीक्षमाणो न निजं प्रसुप्तः ॥१६॥

अथान्येद्युः प्रभाते च यदा स एव महाधूर्तो वणिक् स्वसमाकल्पितयोजनानुसार वन्यैर्हिस्रैर्जन्तुभि समापित जीवनशेष विशेषबलशालिन न पुन प्रत्यागत त प्रचण्ड मत्वा सद्यः स्वाभिलषित सिद्धमिव विचिन्त्य सत्वरमागत्य यथैव समुत्थितस्तथैव गवा गोष्ठ प्रति प्रस्थित, तत्रागत्य

यावद्गोदर्शनाय गोष्ठद्वारे प्रविशति प्रक्षिपति च गोष्ठान्त स्वदृष्टिम्, तावदपश्यत् सकल गोकुल गतजीवितम् निजपापदावानलदग्धमिव विलोक्य, तत्रैव चैकस्मिन् कोणे शयान महाकाय भीमरूप शोणिताक्त-मुख लोलजिह्व वदन प्रदर्शितोग्ररदनम्, निशितनखरनिकर, प्रस्फुरि-तौष्ठ फुल्लितनासापुट घोरतरनि:श्वास महाभैरवरव भल्लूक विलोकयति-तावत् सहसैव नि सारितमहाशोकशब्द सभयचकितविस्फारितनयन: शिरो विधुन्वन् उच्चै क्रोशन् —

**हा-हा-हन्त हतोऽस्मि, दैव ! किमिदं नष्टञ्च हा गोकुलं,**
**आयात: कथमेष पापनिचयो भल्लूकरूपो यम: ।**
**आनीत: कुत एव केन किमिति प्राणापहो गोकुले**
**हा दुर्दैव निवेशितोऽयमधुना, को रक्षकोऽस्माद्भयाद् ॥१७॥**

इति-घोरतर रोदन सृजन् गृह प्रति धावन् - तत्रागतो यत्र प्रचण्ड: प्रसुप्त: आसीत् - तत्रागत्य तमुच्चैराजुहाव-अरे ! रे ! आ प्रचण्ड ! ओह ' प्र - च - ण्ड ' अरे ! हा हतोऽस्मि अरे किमेतत् ? किञ्जातम् ?, अरे ! प्रचण्ड सर्व मे गोधन नष्टम् - एहि - ए हि 'रे ! प्र'' च ण्ड ? स्वय, गच्छ शीघ्र त्वरितमायाहि, पश्य पश्य-अरे ! कश्चिद्विकरालो महाकाल इव, साक्षाद् यम इव समागतो मे गोसम्पद्विनाशको भल्लूक प्रविष्टोऽस्ति गवा गोष्ठे, नाशितवाञ्च रे ! मे सर्वस्वम् ।

प्रचण्ड सकला रात्रिं वने परिभ्रमन् परिश्रान्तो यथाकथञ्चिन्नेत्रे समुन्मील्य अभुक्तावश्यकनिद्रतया जृम्भायमाणो नेत्रे कराभ्या प्रामृशन् समुत्थाय गोष्ठ प्रत्यधावत् ।

तत्र गत्वा च यथाश्रुत यथाकथितमेव सकल गोधन भल्लूकेन प्रणष्ट दृष्ट्वा स्वकृतमेव तत्कर्म मत्वा - गोभ्रमेणानीतभल्लूक स: प्रचण्ड: भल्लूककृतमेतत्सुदुष्कृत समस्तगोधननाशक महापापमय कर्म दृष्ट्वा स्वयमपि महाशोकसागरपतितो भृश क्रुद्धश्च, गोष्ठ प्रविश्य सद्यो भल्लूक-

समीप गत्वा, दण्डेन त यथेच्छ ताडयित्वा, हस्ताभ्याञ्च तस्य कर्णौ पीडयित्वा बलादाकृष्य, तमेव स्वहस्तधृतकर्णयुगल भल्लूक तस्य वणिजः पुरस्तात्कृत्वा - पश्यतोरेव तयो दम्पत्यो [ वणिक् वणिक् पत्न्योः] समक्षे भल्लूकस्य द्वावेवौष्ठौ हस्तेनैकेन गृहीत्वा, द्वितीयेन च करेण तन्नासिकोपरि मुष्ठिकाप्रहार कृत्वा सकृत्प्रहारेणैव त भूमावपातयत् । प्रचण्डस्यैकमुष्टिकाऽऽघातेन प्रसारितवदनो विस्फारितनयनो मुखनासिकाभ्या नि सरद्रुधिरपूर धोर चीत्कुर्वन् क्षण भूमौ विलुण्ठ्य गतप्राणः समभूत्स महाप्राण. । तदानीमेव स्वाङ्गुष्ठतर्जनीविहितकाकचञ्चुभूतया चुटुकिकया च तस्य शरीरात्सकृदाकर्षणेन तत्त्वच समुत्पाट्य, प्राक्षिपत् निस्त्वच मासपिण्डमय दूरमेव काकश्वाश्वृगालाद्यशनायेति । तत पुनरागत्य वणिजमुवाच, स्वामिन् ! कथय किमधुना करणीयमिति ?

तस्य तत्कर्म महामहाबलशालिविहितममानुष विलोक्य वणिक् तत्पत्नी चेत्युभावेव भयार्तौ परस्परमुख प्रतीक्षमाणौ भयसन्त्रस्तमानसौ बभूवतु । वणिक्पत्नी - भयविह्वला प्राह–नाथ ! अद्य तु मयाप्यालोकि महाराक्षसस्य कर्म । हा - हा नाथ ! कुत ममायात एष महाकालः । अयन्त्वावयो प्राणै सहैव प्रस्थास्यतीति निश्चितमेव । कथमेतस्मात्सम्भवेन्नौ मोक्ष । अपि देवाधिदेव ! भगवन् ! दययतु स्वामी, भवतु नौ सरक्षकः । दुर्विनीतमेन राक्षस मनुजवेषमय सद्यः सहर प्रभो ! भक्षन्तु वा केचन भूता प्रेता यक्षा राक्षसा वा दुर्दान्तमेन, येन नौ, दुःखनिवृत्तिर्भवेत् । ससुख निद्राञ्चलभेवहि ।

अतः पर परेद्यु. यथाकथञ्चिच्चिन्तया स्वजीवनसरक्षणोपायपरिचिन्तनेन च सकल दिनमशेषा वा यामिनी समाप्य-प्रात. यथैव तौ समुत्थितौ-समचिन्तयेतामेकमुपायम् । तत्र-वणिक् प्राह स्वभार्याम् ।

वणिक्—देवि ! मा भैषि, सञ्चिन्तितो मया तन्निराकरणोपायः । अस्ति ह्येकोऽविदूरे महान् भयङ्कर प्रेतावासः । यो हि–

प्राणिप्रचारपरिवर्जनभीतिहेतुः
सेतुश्च साध्वसकुलस्य च पापकेतुः ।
प्रेताधिवास इह संयमनी विभूति-
र्भूतिर्विनाशनटनस्य यमप्रसूतिः ॥१८॥

कासार एष सरसीरुहलब्धमानः
शेतेऽधितं ह्यधिसुखं खलु यातुधानः ।
कोऽपीह गन्तुमशकन्नहि संवसानः
ह्यद्यापि पारयति केऽपि न सिद्धयानः ॥१९॥

तत्रायमेवैतदुक्त्वा सम्प्रेषणीय प्रचण्ड यत् तेषु समवशिष्यते भूरि-भूरि मयाऽस्मत्पूर्वजैश्च दत्त, तैश्च समयोपरि पुन प्रत्यावर्तनमयी प्रतिज्ञा विधाय गृहीत धनम् नाद्यावधि प्रत्यावर्तितमिति सम्यक् तान् यातुधानान् तत्रस्थितान् भूतान् प्रेताश्च निर्भर्त्स्य अस्मद्दत्तधनमपि, तत्रत्यमभूतपूर्वं रत्नजातञ्च समानीय सद्यः सामञ्जस्य विधाय, मैत्री वा रचयित्वा त्वयाऽत्रागन्तव्य, गन्तव्य वा नोचेत् यथेष्ट स्थानमितोऽन्यत्रेति इतः किञ्चिदेवाविदूरे निजने सुविशाल रम्य प्रसूनभरावनतशाखिशाखम् वनम्-तन्मध्ये चाति निर्मलजल पङ्कजरेणुरूषित सुविशाल सरः, तत्स-लिलमध्यमधिवसति स यातुधानः प्रेताधिराजो राजराजप्रियसख । शीघ्र-मेव तस्मादस्मद्धनमेकपदे एवानेतव्यमिति ।

इत्थ पूर्वकृतनिश्चयानुसार असार वा ससार परित्याजयितु मृत्युमुखे प्रक्षेप्तु वा प्रचण्ड, सद्यः समाहूय धूर्तराज स. वणिक् सर्वमेव कर्तव्य कार्यं त बोधयित्वा सरोवरविषये तत्रत्यपरिस्थितिविषये, प्रेतगण-राज-यातुधान सवासादिसम्बन्धे सर्वं विज्ञाप्य, ते च कियन्तो धूर्ता मिथ्यावादिन, हिसका रौद्राः, धन गृहीत्वा न पुन प्रत्यावर्त्य स्वमुखदर्शका इति त (प्रचण्डम्) प्रेषयितु समादिदेश, धनमलभ्यैव रिक्तकरस्य प्रत्यावर्तन च न ते श्रेयः, इत्यपि स्वव्यवहारपारुष्यमपि प्रकटयामास स धूर्तो वणिक् ।

प्रचण्ड' प्रेषणरहस्य विज्ञायापि यत् [ भूताः प्रेताः वा किमु कुतः किमपि कस्मादपि द्रव्यादिक ( ऋणरूपेण ) गृह्णन्ति कुत्रापि ? ] इति जानन्नप्यजानन्निव तमपृच्छत् —

प्रचण्ड —किम् भो । कियद्धन तैर्भवत त्वत्पूर्वजेभ्यो वा गृहीतम् ।' कियन्मानञ्चाद्यावधि जातम् ? कियद्वा समानेतव्यमिति सर्व विविच्योच्यतामिति ।

वणिक् —तेभ्योऽस्य सद्यः एव मृत्यु मीमासमान', न पुनरय ततो जीवितमत्रायास्यतीति व्यर्थमेवास्य प्रश्नविधिरिति विचार्योवाच— "यावत् धन ते दद्युः, तावदेव गृहीत्वा सद्यः समागन्तव्य न तत्राधिक स्थेयमिति । शृणु रे प्रचण्ड ! सन्त्यमी सर्वे प्रेता , न तेषा विश्वासः करणीय ।

प्रचण्डः—

**यदाज्ञापयति स्वामी, यावद्दास्यन्ति ते धनम् ।**
**तावत्तेभ्य समादाय, पश्य, प्रत्यागतं हि माम् ॥२०॥**

इत्युक्त्वा स प्रचण्डस्ततसरोवर प्रति प्रस्थितोऽभूत् । गमनसमये च सः स्वात्मना सह सण''पुञ्ज गृहीत्वा रात्रौ तस्मिन् घोरतमे सर्वथापवर्जितजनप्रचारे निविडनिशीथान्धकारबहुले बहुलपक्षे-महामहातरुस्तोमशाखाप्रशाखासहस्रनिर्मिते, ःहस्रकरकरसहस्रसमवरुद्धसञ्चारे वनैकदेशस्थिते सरस्तटे समागत्य तस्य च निर्माणकौशल, प्रकृतिप्रदत्तरमणीयता सहसा नयनकौतुककमनीयता अद्यावधि प्राणिमात्रसमागमसौख्यपरिवञ्चिता सर शोभामालोक्य क्षण विश्रम्य, तज्जलेन विलक्षणगन्धबहुलेन शीतलतमेन हस्तौ पादौ मुखञ्च प्रक्षाल्य, 'सण पुञ्जमपि' जले निक्षिप्य, समाकृष्य तदग्रभाग जललग्न शेषञ्च तटोपरिधृतं तत्समीपे एव स्वकीय निर्भयासन परिकल्प्य स्थित्वा च, तस्मात् सणपुञ्जात किञ्चित किञ्चित्सणलोमभागमादाय, तेन शनैः शनैः

शान्तगभीरभावेन रज्जु निर्मातुमारभत। स्वमनसि चास्पष्ट नात्युच्चशब्दघोष मन्द-मन्द गीत गातुञ्चोपाक्रमत्।

इत्थ रज्जुनिर्माणकर्मणि प्रवृत्ते प्रचण्डे प्रथमो यामो व्यतीत। तस्य रज्जुनिर्माणक्रमश्च यथावस्थित प्रचलित एवासीत् सद्य एव द्वितीययाम समाप्तिरपि जाता। निविडे सूचीभेद्ये तमसि नीरवे च निशीथे जाते सहसैवैक कश्चिद् धूम्रवर्णो मुक्तकेशश्चक्रदृक् शोणिताक्तनयन", खरतरशब्द समुदतिष्ठत् सरोवरमध्यात्। यथा हि सरोवरजल क्षुब्धमभूत् नीहारस्तोमः सहसा प्रासरत्, समुद्भूतश्च कर्कश कर्णविवरविभेदी गगनगर्जनानुकारी महाभैरवो रव। प्रचण्डस्तु स्वयमेव महाभैरवावना न जानातिस्म 'भयमपि भवति किमपि वस्तु लोके' इति। स तु यथावस्थित एवैकत्र स्थितो न मनागपि विचचाल स्वासनात्।

दृष्ट्वा च तस्याचलप्रतिष्ठमासन, साध्वसशङ्काशून्यञ्च तन्मानस, अविकृतभावेन स्वकार्यासक्त वा त धीरप्रशान्तमालोक्यातिविस्मितः स प्रेताधिराजदूतो भूतः स्वमस्तक बहिर्निष्काश्य सविनय त कमपि देवदूत राजराजप्रहित पुण्यजन च मत्वा किञ्चित्समीपमागत्य सादर पप्रच्छ।

**वेतालः**—किमरे!

**किं करोषि महात्मंस्त्वं को भवान् कुत आगतः।**
**किमर्थं ते स्थितिर्देव! ह्येकाकी किमपेक्षसे? ॥२१॥**

**स्वच्छन्दतायामस्माकं विघ्नभूतः कथं भवान्।**
**अस्मद्विहारवेलायां निशीथे नीरवेऽद्य भोः ॥२२॥ इति**

**प्रचण्डः—** **प्राह प्रचण्डः समुदीर्य घोरं**
**निर्भर्त्सयन् त समुपस्थितञ्च।**
**कि मन्दबुद्धे! परिपृच्छसीति,**
**नावेक्षसे यत् किमहं करोमि ॥२३॥**

रे वञ्चक ! त्वं ह्यनभिज्ञ एव ?
जानासि नो मां यत एव भूताः ।
प्रेताः पिशाचाः खलु तावका ये,
सर्वे ह्यगृह्णन् ऋणभूतकोषम् ॥२४॥

ये हि ते सम्बन्धिनः सुहृदः पूर्वजा वा सन्ति आसन् वा ते त्स्वामिन वञ्चयित्वा, तस्मादृणरूपेण धनमाहृत्य पुनस्तद्धन समय एव त्यावर्तयितु प्रतिज्ञावन्तश्चाभूवन् त एवाद्यप्रभृति स्वगृहीत तद्धन न त्यावर्त्तन्त, नाद्यावधि स्वमुखमपि त दर्शयामासुः. ततः स्वात्मान ारोहितमेव कारयितुमिह जनसञ्चाररहिते भयानके सरसि प्रच्छन्ना- न्ति न निःसरन्ति तस्मात् अत तान् सर्वान् अनयैव सुदृढया रज्ज्वा ागडय्य नेष्याम्यह स्वस्वामिसमीपम् । ततः स्वामी यदाज्ञापयिष्यति था तेषा कृते दण्डविधान करिष्यामि ।

वेताल —भगवन् ! किमर्थमेव कुप्यमि, किमनुष्ठयेमस्माभिः ?

प्रचण्ड :— रे रे मदान्ध ? नावगत त्वया मत्कथनम् ? धूर्तता वञ्चना वा विदधासि ? स्वयमेव मयोक्त सर्वम् । किमवशिष्यतेऽधुना ःथनीयम् । शृणु रे, मूढमते ! इदमेव ते त्वदीयाना वा मत्स्वामिनः सका- ादृणग्रहीताना सम्प्रतीदमेव कर्तव्यमस्ति यत् ते यथा ऋणग्रहण समये विनय याचमाना आसन् तथैवाधुनापि तदीय तद्द्रव्य सर्व तज्जनितला- ोपलाभमय द्रव्यसहित गृहीत्वा तत्समीप गत्वा च सविनय प्रत्यावर्तय- न्त्विति, नान्यथा ते कुशल भविता सर्वेषा वा तेषामिति । ततश्च- दृणमुक्ता सर्वे सानन्द यथेच्छ निवसन्तु विहरन्तु च ।

वेताल —भगवन् ! क्षण विश्रम्यताम् । अहमपि स्वस्वामिनमुपसृत्य ाकलमुदन्त निवेद्य प्रत्यागच्छामि । प्रतीक्षस्व तावत् त्वमत्रस्थित एव ।

इत्युक्त्वा स प्रेतः तस्मिन्नेव सरसि निमग्नोऽभवत् । अत्रान्तरे स ाचण्ड तेनैव शणपुञ्जेन महती लम्बायमाना रज्जु निर्माय ता उभयतो ाबद्धमुखी विधाय, [द्वे एव मुखे नियोज्य] गभीरे पयसि निक्षिप्य मध्यतस्तु ा स्वहस्ते धृत्वा स्थितोऽभूत् । सरसस्तटे च एव बहुगभीर गर्त खातयित्वा

तदुपरि इदूर्वाङ्कुरान् तरुपल्लवाश्च कोमलानास्तीर्य, स्वकीयशिरोरक्षिणी-मुष्णीषिका तदुपरि रक्षित्वा तन्मध्ये च छिद्र विधाय स्थितः।

तस्मिन्नेव क्षणे पुनस्तस्मात् सरसः स एव प्रेत समुद्भूय तत्समीप-मागत्य, तस्य परीक्षा शक्तिज्ञानञ्च कर्तु प्रावोचत्।

वेताल प्राह—किम्भोः महानुभाव! वय तु पातालतलवासिन. स्मः कथ भवानस्मान् रज्ज्वानया बद्ध्वा नेष्यति?

प्रचण्डः - प्रत्युदतरत्—अरे! स्वल्पमते! न ते मस्तिष्केऽपि समायाति किमपि? पश्यसि न किम्? इमा पातालाधिकप्रदत्ता ब्रह्मणो वरदानाल्लब्धा, सकलभूतप्रेतनिबन्धिनीमनाद्यनन्ता विविध मन्त्र-तन्त्रमयी रज्जुमिति, वदन पादेन ता जलमग्ना पादङ्गुष्ठाङ्गुली-मध्यगता सयुक्तोभयमुखी वर्तुलाकारा हस्तेन समाकर्षन् - बहुकाल मण्डलमयी तामितस्तत पुनः पुन. कर्षन्नपि न तस्याः अन्त जगामेति-प्रदर्शयन्नेव विचेष्टते स्म।

प्रेतोऽपि तत्सर्वं विलोक्य रज्ज्वाः अन्त प्रान्त चापश्यन्नेव साक्षाद् ब्रह्मदत्तामेव ता मन्वानः प्रोवाच—

वेतालः — भगवन् त्वमेव ब्रूहि तावत् - कियति धनेऽस्माभि-र्दत्ते त्वत्स्वामिनो गृहीतादृणान्मुक्तिर्नो भविष्यतीति कियद्वाऽस्ति देय धनम् कृपया ममाज्ञापयेति।

प्रचण्डः प्राह—शृणु तावत् - सौम्य! वस्तुतो यदि त्वमस्माकः मृणान्मुक्ति कामयसे, तर्हि मदुष्णीषिकामेवैना सुवर्णरजतमुद्राभिः पूरय - पूरितायामेवैतस्या वय पूर्वदत्तमेवास्मदीय द्रव्य प्रत्यावर्तितमेव मन्स्यामः करिष्यामोऽथ व सर्वान् स्वकीयर्णमुक्तान्। तावदेव धनमादाय भवता सर्वेषा प्रतिनिधिर्भूत्वाऽहमेव मे स्वामिन सर्वविधया रीत्या नीत्या च तोषयिष्यामि। नान्यदधिकमावश्यक भविष्यति तदर्थन्तु। इति।

वेतालः—यदाज्ञापयति भवान्, इत्युक्त्वा सद्यः स्वस्थानात् सरसस्तलतः समानीय - राजतीभिः स्वर्णमयीभिश्च मुद्राभिस्तद्रुष्णीय

पूरयितुमुपाक्रमत । परञ्च तदुष्णीषिका सा तु न ताभिः पूरिता पारिता च समभवत् । पुनः पुनः परमाश्चर्यचकितः स प्रेतः ( वेतालः ) सत्यमेव त देवदूतमपरिमेयमहिमान मत्वा वारं वारं स्वस्थान गत्वा सकलं समुपार्जितञ्च धन धृत्वा, ब्रह्मवरोन्नद्धञ्च त सर्वशक्तिमन्तं भुक्ति स्वर्गाद्वा मुक्तिमपि दातु समर्थं गृहीतद्रव्यस्याप्रत्यावर्तनरूपमपराधञ्च स्मृत्वा स्वनिवासादानीयानीय धन, तामुष्णीषिका पूरयितु यतते, परञ्च न सा यदा पूरिताऽभवत-तदा सैव वेतालः स्वहस्तौ सम्पुटीकृत्य बद्धाञ्जलिरतिविनीतः सन् तमेव शरणीचकार-प्राह च—

वेतालः—प्रभो ! नातः पर किमपि दातु समर्थाः वयम् । क्षमस्व, प्रसीद ह्यं तावतैव समर्पितेन पत्रपुष्पमयेन द्रव्येण । प्रीणयतु भवान्वैतावता द्रव्येण स्वस्वामिनमपि । सम्प्रति मोचयास्मान् स्वकीयर्णपाशात् ।

प्रचण्ड :—प्रसन्नः सन् सकुटुम्बञ्च त, सर्वथा ह्यभयदानेन सन्तोष्य प्रोक्तवान्—

"सर्वेऽत्र सुखिनः सन्तो विहरन्तु यथारुचम् ।
निवसन्तु सदानन्दा माभूदस्मद्दणाद्भयम् ॥२५।

न कश्चिदन्यः क्वचिदागमिष्यति,
प्रवर्तयिष्यत्यथवा स्वसेवकम् ।
स्वकीयदत्तर्णं जिघृक्षयाथवा,
सुखं वसाना विचरन्तु निर्भगाः ॥२६॥

सम्प्रति सर्वेऽस्मदृणान्मुक्ताः सञ्जाता, जाता चावयोः सुदृढा मैत्री च, अतोऽहमपि प्रार्थये यद् यदाकदाचनात्रागत्य भवन्त समाह्वयेयञ्चेत्तर्हि भवान् भवदीयो वा कश्चन सद्य समागत्य मदभिलषितञ्च श्रुत्वा भवद्दर्शादिसम्बन्धिनीमन्या वा काञ्चन स्पृहा पूरयितु भवन्तोऽपि दत्तवचना भवन्त्विति ।

वेतालः-भगवन् ! स्वकीयाना सर्वेषा प्रातिनिध्य विदधता मया प्रतिज्ञा क्रियते यद् यत्रकुत्रापि यस्या कस्या वा परिस्थितौ पतितः यस्मिन् कस्मिन्नपि क्षणेऽत्रागत्यास्मान् समाह्वयिष्यति भवान् तत्क्षणमेव वय सर्वे अस्मासु वा कोऽपि तदानी विद्यमानो वा भवेत् सत्वरमागत्य विधास्यति भवतः साहाय्य, पालयिष्यति च भवदादेशान् ।

इत्थ— "परस्परालापसुखानुभतिं,

सहानुभूतिं सुगुणप्रसूतिम् ।

भूति स्थिरामाप्य ततः प्रयातौ

स्वं स्वं गृहं शान्त्यभये च लब्ध्वा ॥२७॥

प्रचण्ड विसृज्य वेताल पुनः स्वस्थाने सरसि निमग्नोऽभवत् । प्रचण्डोऽपि सर्वमपार धनराशिमादायानेकमोट्टलिकासु निबद्ध समानीय तस्य वणिजो गृहमेत्य, तत्सम्मुखे महान्त त धनराशि सस्थाप्य, सकल तत्र घटित वृत्तान्त त सभार्य श्रावयामास । श्रेष्ठी परम लुब्धोऽपि, भूरिधनराशि दृष्ट्वाऽपि नातिप्रसन्नोऽभवत् । वणिग्भार्या च तद्धनमीक्ष्य भृश भयभीताऽभूत् ।

प्रेतै पिशाचैर्वेतालैः सर्वैस्तद्वशगैरयम् ।

समर्पितोऽपरिमितो धनराशिः समर्चित ॥२८॥

इति विचिन्त्य हर्षापेक्षया धूर्तोऽपि वणिक् विस्मितः सन् नोवाच किमपि निमग्नो वाभून्महतिशोकसागरे । चिन्ताकुलश्च नोच्चैः स्वमनसि रुरोद ।

प्रचण्डः-गृह्यतामिद धनं प्रेतवेतालैः सर्मापतम् कथयतु स्वामी कियद्धनमवशिष्यते तेभ्यः समानेतुम्, शीघ्रमाज्ञापय, आज्ञाचेत् तानप्यानीय समुपस्थापयेयम् ।

वणिग्वर –धन्य धन्य महाभाग ! धन्यस्त्वमेव नान्यद्धि किमप्यवशिष्ट-मत' पर न वा नेतव्यञ्च तेभ्य किमपीति । वैतालिकञ्चैतद्धनं कथ मे गृहे स्थास्यतीत्यस्ति मे मानसे चिन्ता, स्वस्तिकर क्षेमद वाऽपि भविष्यति

न वेति । गच्छ तात ! ससुख यथेच्छ स्वपिहि, भगवन् ! सम्यक् पारिता त्वया स्वामिनिष्कृति । इति प्रचण्ड सन्तोष्य भोजयित्वा च त शयनाय विससर्ज ।

तत वणिक् - तद्भार्या चेत्युभौ परमखिन्नौ चिर स्मृत्वा स्वप्रतिज्ञा विलोक्य चासन्नसमाप्त वर्षावधिक काल स्वात्मनोऽपि जीवनान्तक काल प्रचण्डस्यैकमुष्टिपातक्षणे एव परलोकदर्शनम्, चुटुक्किकया च श्रेष्ठान्या-स्त्वग्लुञ्चन स्मार स्मार रुरुदतु । नाधुना क्षेमं पश्याव इतो यमदंष्ट्रा-यमानस्य पाशात् स्वात्मानं रक्षितुकामौ स्वश्चेत् सद्य एवेत पलायनं श्रेय । शीघ्रमेव त्यज्यतामिद गृहं सर्व निधिञ्चेति, नान्यथा प्राणै सह गमिष्यति सकलो धनराशि इति निश्चयं कृत्वा सूर्योदयात् प्रागेव वणिग्दम्पती तथैव सर्वं धनधान्यादिकं अश्वगजबलीवर्दादि पशुसमृद्धि सन्त्यज्य न जाने कुत्र प्रस्थितौ न पुन स्वगृह प्रत्यागतौ । नैवापश्यच्च कोऽपि तत प्रभृति तौ दम्पती ।

प्रस्थितयोश्च तयो प्रभाते प्रचण्ड सुप्तोत्थित वणिज कार्यार्थं प्रष्टु गृहमागतो नापश्यत् तयो पदचिह्नमपि तत्र । साश्चर्यं तन्निरीक्ष्य, अशेषञ्च त महाधनराशिं तदुपार्जितम्, स्वाहृत च वेतालादिभ्य यथाऽनेन सुरक्षितं तथैव पोट्टलिकासु बद्धमस्पृष्टमनालोकितञ्च ताभ्यामिति मत्वा दृष्ट्वा च समस्य तस्य गृहस्य स्वयमेव स्वामी कर्ता धर्ता विधाता च समभवत् । तत स्वभृत्यान् समाहूय स्वगृहं प्रेषयित्वा सकलाश्च बन्धुबान्धवान् जननीजनकौ च समाहूय सर्वमात्म-वैभव प्रदर्श्य विभज्य च यथोचित धनम् स्वय सर्वाधिकारी सम्भूय ससुख न्यवात्सीत् । विविधसम्पद्भि सर्वविधान् भोगानुपभुञ्जान ससुख सहर्षं सोल्लास स्वात्मपौरुषसुखमन्वभवत् सैव वणिग्गृहस्था प्रसन्ना लक्ष्मीस्तमेवासेवत ।

उक्तञ्च—भार्या भूमिर्भूषणञ्च, भवन भार्गवी तथा ।
बलहीन त्यजन्त्याशु भजन्ते बलवत्तरम् ॥२९॥

# अराजकतायाः मूलं राज्ञः समुपेक्षैव

अथासीत् काश्या अधीश्वरो ब्रह्मदत्तनामा । आपाञ्चालान्त कोपिल्यनगरस्य राजासीत् । कोपिल्यनगर तदानी उत्तरपाञ्चालदेशस्य राजधान्यासीत् । तत्रत्यो राजा ( पाञ्चालनामा ) अतीवविलासप्रियो दुराचाररतश्च बभूव । सः शासनसम्बन्धिकार्येषु किञ्चिदप्यवधान मनोयोगं वा नोररीकृतवान् । तदनुसारमेव तदीयाः कर्मचारिणोऽपि तादृशा एवाभूवन् । उक्तञ्च "यथा राजा तथा प्रजा" । तस्य मन्त्री, शासनपदाधिष्ठिताश्चान्येऽप्यधिकारिण तथैव दुराचाररताः समभूवन् । तेषा दुराचारैः प्रव्यथिता प्रजाऽपि सन्त्रस्ता जाता । सकला प्रजा सर्वे नागरिका', अशेषा व्यापारिणश्च नानाविधैरुचितानुचितरूपेण 'कर' दण्डः अपकर्षण, अपहरणादिनानाविधानैः समन्ताच्चूष्यमाणा (चोष्यमाणा ) नितरामखिद्यन्त । प्रतिदिनमेव तत्राराजकता प्रवर्धते स्म । प्रजा च क्षणैकमपि शान्ति सुखञ्च नानुभवति स्म । दिवा तु राज्ञः कर्मचारिण स्वकीयातङ्केन, रात्रौ च चौरा· चौर्यव्यापारेण समस्ता प्रकृति क्षुब्धामकुर्वन् । एवमेव संरक्षणविभागेऽपि नियुक्ता कर्मकरा ह्यधिकारिणश्च रक्षणस्थाने भक्षणमेव विदधति स्म ।

इत्थ सर्वोऽपि नागरिकोजनः स्वस्वगृहद्वाराणि पिधाय महतीभश्चायसकीलशृङ्खलाभि· पिहितमेव द्वार विधाय सर्वदा सन्त्रस्तः पदेपदे विशङ्कमान· सकुटुम्बो स्वकलत्रपुत्रपौत्रादि परिवार स्व स्व वासस्थानं विहाय वनानि सेवयामास। वन गतानाञ्च सर्वेषा शून्यानि गृहाणि बृहत्कपाटायसकीलशृङ्खलासनाथान्यप्यनाथानीव बहिर्भागे च कण्टकिक्षुपशुष्कपुञ्जैः प्रावृतानि श्मशानतुल्यान्यभूवन्। नागरिका हि सर्वं दिनन्तु वने एव प्रावसन्। अर्धरात्रपश्चाच्च पुन स्व स्व भवनानि प्रत्यावर्तन्ते स्म। प्रत्यहमेव स्व-स्व भवनेषु स्वरक्षित वस्तुजात यथावस्थितमेव यदा पश्यन्ति स्म, तदानी सर्वं पुनर्भगवद्दत्तमेवामन्यन्त।

अस्मिन्नेवावसरे-बोधिसत्वो नगरस्य बाह्यप्रदेशे कस्यचित्तरोरधिष्ठातृदेवतास्वरूपे प्रादुरभवत्। राजा च प्रतिवर्षं तदर्चां कुरुते स्म कारयति स्म वा। तत्समीपे च जनसम्मर्दो मेलकमहोत्सवो वा समनुष्ठितो विरचितो भवति स्म। तस्मिंश्च भूयसा रूप्यकाणा व्ययोऽप्यक्रियत्।

अथैकदा बोधिसत्वनामा स देवो व्यचिन्तयत्, यदय राजा यो हि परमया श्रद्धया प्रत्यब्द मे पूजन करोति कारयति च प्रजाजनैः, भजते च स्वभक्त्या। स हि स्वकीयाऽज्ञानेन सदसद्विवेकराहित्येन च स्वराज्ये 'अराजकतायाः' भवन्नास्ते, अत एन सन्मार्गे आनयामि इति। नान्यो वा कश्चन मदन्यो जनो देवो वा सन्मार्गे समानेतु शक्तो भवितुमर्हति। अत एवाद्य सम्प्रति ममैतत्कर्तव्य भवति। करणीयञ्च मयेति।

इत्थ विचिन्त्य स बोधिसत्वस्तत्र गत्वा प्रत्यक्षोऽभूत् यदत्र स राजा प्रसुप्त आसीत्। सहसैव सूर्यसम देदीप्यमान सर्वतो व्यापिन प्रकाश स्वसम्मुखे समुद्गत वीक्ष्य, सविस्मितः तमद्भुत देव सप्रश्रय प्रणम्य प्रावोचत्—भगवन्! को भवान्? बाधते ध्वान्त निशीथप्रभवमिति।

देव.—राजन्! अहमस्मि देवता, यामिह प्रत्यह त्व समुपास्से। त्वामद्य समुपदेष्टुमहमत्र समागतः, इत्युवाच।

राजा—भगवन् ! कीदृशः स समुपदेशोऽय मे श्रेयस्कर मनुपे ?

देवः—राजन् ! शृणु तावदवधानपुरःसरम्, भणामि । प्रजापालक ! सम्प्रति भवानसावधानो मदमत्त इव विनैवावधानेन राज्यसञ्चालन वितनुते, अतः प्रत्यह ते राज्य विनाशमुपयाति । यो हि महीपालः प्रमत्तः सन् न्यायसत्पथमनालोच्य शासन विधत्ते, स ध्रुवमेव निरय प्रयाति । स्वस्वामिन शास्तार राजान समुत्पथगामिन वीक्ष्य तदीयाः कर्मचारिणोऽपि मन्त्रिप्रभृतयः समुद्धताः दुःशीलाः दुःशासकाः दुःशासन-समा एव भवन्ति । तथाविधेषु तेषु सकलराजपरिकरेषु सत्सु तदीयाः प्रजाः अनाथा इव लुण्ठाकैर्लुण्ठ्यन्ते, दुष्टैर्दूष्यन्ते । सर्वतः सन्त्रस्ता इतस्ततो धावमानाः सुतरा समुच्छिन्नाः भिन्नाश्च भवन्ति । प्रत्यह परिपीडिताश्च ताः स्वराजान शपन्ति । प्रजयेत्थ भृश शप्तो राजा सद्यः सपरिकरो विनश्यति । अतः सर्वथा सावधानेनैव शास्त्रा राज्ञा सर्वदैव भाव्यमिति । अहरह सन्मार्गे एव चलितव्यम् ।

राजा—देव ! साम्प्रत किमनुष्ठेय मया ? तर्हि ।

देवः—सम्प्रति स्वीय शासनभार स्वीयस्कन्धोपर्य्येव सर्वात्मना भवता धार्यम् । शासनसत्ता स्वकरे धृत्वा सर्व राज्यसञ्चालन स्वयमेव कुरु । येन ह्यमात्यादिभि प्रमाद-परिपोषिता ह्यराजकता सद्य एव क्षयं यास्यति ।

> राज्यं प्रणश्यमान हि सरक्ष धरणीधर ।
> उच्छिद्यमानास्ताः सर्वा पुन संस्थापय प्रजा ।।१।।
>
> सर्वतः प्रसृतामेनामशान्ति सर्वराज्यगाम् ।
> दूरीकृत्य पुन क्षेमं प्रजासु परिकल्पय ।।२।।

इत्थं समुपदिश्य राजान स देवस्तत्रैवान्तरधीयत ।

राजाऽपि सद्य एव प्रबुद्धो निरस्तमदः सम्यगवबोधितोऽभूत् । ततः प्रभृति सः स्वमनसि निश्चयं कृतवान् यत्तस्य राज्यस्य कीदृशी

परिस्थिति साम्प्रतमस्तीति, स सर्वं स्वयमेव सावधानः सन् ज्ञास्यतीति। ततः परेद्युः स सर्वान् स्वमन्त्रिणः समाहूय समादिष्टवान् यदद्य प्रभृति भवन्त एव निःशेष स्वराज्यशासनसूत्र स्वकरगतीकृत्य कार्यभार सम्भालयन्तु, येन न कोऽपि कुत्रापि किमपि कस्यापि वैपरीत्य पृष्ठान्वीक्षणमहितञ्च दुष्कृत्यमाचरेत्। इति सतर्कैरेव भवद्भिर्भवितव्यमिति। इत्थ सर्वान् सावधानान् विधाय स्वयञ्च स्वकीय पुरोहित समाहूय स्वात्मना सह समानीय च प्रच्छन्नवेषेण सर्वस्याः नगर्य्या परिस्थिति विज्ञातु नगरीनिरीक्षणार्थं प्रस्थितः।

नगरस्य बहिःप्रदेशे तौ कमप्येक बृद्ध पुरुषमपश्यताम्। यो हि प्रतिदिन यथानियम गृहस्यद्वार कपाटशृङ्खलाऽर्गलाभिः सुरक्षित विधाय, बहिर्भागे च स्वगृहस्य समन्तात् कण्टकजालेन आवृत्य प्रच्छाद्य च द्वार सम्यक् सपुत्रकलत्रो वन प्रस्थितोऽभूत्। स एव साय पुनः प्रत्यागत स्वगृहद्वार समुद्घाटितवान् तस्मिन्नेवावसरे तस्य पादैकदेशे सहसैव कण्टकोविद्धोऽभवत्। स च तत्क्षणमेव स्वपाद करे बिभ्रत् चीत्कारञ्च कुर्वन् तत्रैवावस्थितोऽभूत्। महत्कष्टमनुभूय कण्टक निःसारयन् सशोक साश्रुपातमिदमुवाच—

वृद्ध ब्राह्मणः— "यथा ममाय चरणो व्यथाकरैः
सुकण्टकाविद्धनिरुद्ध सद्गतिः॥
शल्यैः समस्ता नुदति स्वदेहजा
मनोभवा वाचनिकी च दुर्व्यथाम्॥२॥

तथैव राज्ञः समुपेक्षितस्य, स्वराज्यसञ्चालनदुर्विनीतैः।
दुर्मन्त्रिभिः पीडितसत्प्रजस्य देहे सुशल्या विशिखाः पतन्तु॥३॥

इत्थ कण्टकविद्धपाद स बृद्धो राजान प्रत्यवाच्यवादान् बहून् प्रयुज्य सबहुप्रलाप रोदनमकरोत्।

पुरोहित सर्वमेतच्छ्रुत्वा वृद्धसमीप गत्वा, प्रणम्य च त सविनय पृष्टवान्–भगवन् ! कथमेव राजान दूषयसि ? कोऽत्र राज्ञो दोषस्त्वया दृष्टः ? यदि भवानेव स्वय भूतलतलमनालोच्य व्रजसि, येन ते पादौ कण्टक-कलितौ भवत । स्वयमेव च त्व कण्टकिक्षुपपुञ्जैः स्वगृहद्वार सर्वतो वा गृहमावृणोषि तेनैव स्वकृतकर्मणा प्रसारितकण्टककुलेन स्वयविद्ध. क्षतविक्षतो भवसि, कष्टञ्चानुभवसि चेत् तत्र राज्ञोऽस्मिन् को दोष । पुनर्व्यर्थ किमर्थ दूषयसि राजानम् ! कथ वा शपसि । इति ।

श्रुत्वैतत् पुरोहितवचन तत्सन्देह निराकुर्वन्नुवाच–

वृद्ध –किं भोः ! महानुभाव ! राज्ञोदोष कथ न विपश्यसि ?

यतो हि राजा महाननर्थकारी दुराचारी, अन्यायनिरतः प्रमत्तो मदान्ध एव । तथैव - स्वस्वामिनमेवानुकुर्वाणास्तादृशा एव तन्मन्त्रिणो भवन्ति चेन्नाश्चर्यम् । शासनाधिकारिणः पदाधिष्ठिता उच्चाधिकारिणश्च, सामान्या वा जनाः तत्परिकरे च नियुक्ता भवन्ति तेऽपि स्वस्वामिनोऽनुकारिण एव, तेनैव तेषा व्यवहारेण भृश पीडिता जनाः भर्त्सिता वा प्रजा विच्छिन्ना इतस्तत प्राणरक्षार्थं वनमेवाश्रयति । यथाकथञ्चिद् दुष्टशासनपरिणामदर्शनायैव वने निवसन्ती जीवति . यदि राजा दुष्टो न भवेत् दुराचारी वा तर्हि किमर्थमेव वय प्रजापुरुषाः इत्थ स्व - स्वगृहाणि त्यक्त्वा, कण्टकावृतानि वा विरचय्य वन शरणीकुर्याम । न वेत्थञ्च कण्टकक्षतानुभवमनुभवेम । अत कथयामि राज्ञ एवाय दोषः । इति श्रुत्वा राजा पुरोहितस्य कर्णे किमपि कथयति यद् अय वृद्ध. कथयति तत्सर्वं सत्यमेवेति । चलत नगर प्रति शीघ्र चलावः सुव्यवस्थाञ्च स्थापयाव ।

इत्थ राजा पुरोहितश्चेत्युभावेव नगर प्रत्यचलताम् ।

पुरोहित –देव ! त्वरा मा कुरु, आवामन्यत्रगत्वा राज्यान्तर्गतान् ग्रामानपि पश्येव । तत्रत्याभिः प्रजाभिः सहसम्पर्क सस्थाप्य, तासामपि

विचारधारा जानीवः। इत्युक्त्वा स पुरोहितः राजानमन्यत्रानयत्। गच्छन्तौ च तौ मार्गे काञ्चन रुदन्ती स्थविरा दृष्ट्वा तत्रैव क्षणमतिष्ठताम्।

वृद्धाः रुदन्ती सती कथयतिस्म यद्—हा भगवन्! अस्मिन् दुष्टशासके राजनि जीवति सति न मे कन्यकयोर्विवाहविधिः सम्पत्स्यते इति।

राजा— पुरोहित वीक्ष्य - भगवन्! तत्समीपमुपसृत्य विज्ञायता कथमिय स्थविरा तथा रोदिति इति।

पुरोहितो राज्ञ आदेशानुसार सत्वर तत्समीप गतः।

पुरोहित—स्थविरे! देवि! किमेव स्वकीयमपराध राजान प्रति प्रक्षिपसि? कथञ्चैतादृशी दशा गता। ईदृशी स्थविराऽपि वनमासाद्य कष्टमनुभवसि? साम्प्रत तव कन्यकयोर्विवाहस्यात्र क प्रसङ्गः?

इति पुरोहितेन पृष्टा सा वृद्धा प्रस्रवदश्रुधारा परमखिन्ना दुःख-कातर - वचन प्रोवाच—

वृद्धा—भगवन्! यादृशी जीर्णकलेवरास्मि, ता तु भवानपि विलोकते प्रत्यक्षमेव, न मे कश्चनापरः सहाय. पुत्र पौत्रो वा, यो मे वृत्ति सम्पादयेत्। गृहे च मे साम्प्रतमस्ति कन्यकाद्वयम्। तयोरेकात्वष्टादश वार्षिकी प्रवेक्ष्यति चैकोनविशतितमेऽब्दे। ततः कनिष्ठाऽपि चतुर्दशवर्षेभ्योधिकाऽभवत्। किन्त्वद्याऽप्युभे एव कुमार्यौ स्तः। नाह गृहे एकाकिन्यौ ते त्यक्त्वा वरान्वेषणार्थं कुत्रापि गन्तु पारये। दुष्टे दुराचारिणि राज्ञि, ततोऽप्यधिकदुराचारव्रते वा तत्परिकरे विद्यमाने ते स्वगृहादपि कुत्रापि न बहिर्गन्तु शक्ते स्त। किम्बहुना स्वोदरपालनार्थमपि कामपि वृत्ति भृत्यता वा समासादयितु, समुपार्जितु वा द्रव्य, न स्वह गन्तु समर्था ते गृहे विहाय, न वा च ते एव मा विहाय स्वय बहिर्निःसरणायालम्। अतोहमेकाकिनी प्रतिदिन वनमागत्य वृक्षाणा पत्राणि त्रोटयित्वा नयामि विक्रयणेनैवैतेषा, समुपलब्धमूल्येन पारयामि

स्वपारणाम्। दिनेतु दुष्टकर्मचारिणा भयमुज्जृम्भते, रात्रौ च चौराणां, अतो दुष्टराज्ये कुतः ससुख निवासः कुतो वा वरावलोकनम्। अत एव मयोक्त - यदस्मिन् दुष्टे शासतरि जीवति सति न मे कन्यकयो सम्पन्नो भविष्यति वैवाहिको विधिः। इति।

पुरोहित'—स्थविरे! किमस्ति एतदपि कार्य राज्ञा करणीयमेव। सर्वासा कन्यकाना कृते राजा वरान्वेषण कुर्यात् किमु?

वृद्धा—न हि भगवन्! न मेऽभिप्रायस्त्वेतादृशः? यमेव भवान-वगतवान्। ममत्वेतावदेव तात्पर्य्यं यद्दुष्टे राजनि सति, तत्परिकरः सर्वोऽप्यधिकारिगणः दुष्ट. प्रभवति। ये खलु रक्षका, प्रजापालनपरा एव भवन्ति, त एव यदि भक्षका भवेयुस्तर्हि प्रजा क शरण य।यात्। दिने तु दुष्टकर्मचारिण पीडयन्ति रात्रौ च चौरा पुनः कथ प्रजाजनप्राण-रक्षणम्। कुतो वा मादृशाया स्थविरायाः कृते वरावलोकनार्थं गमनञ्च, कथ वा यौवनसम्पन्ने कन्यके, शून्ये गृहे एकाकिन्यौ विहाय देशान्तरप्रस्थानमिति।

अथाग्रे राजा पुरोहितश्च ग्रामान्तरमीक्षितु प्रस्थितौ किञ्चिद्दूरं गत्वा, पश्यतस्तौ कमपि समायान्त कृषीबलम् स्व क्षेत्र बलीवर्दाभ्या कर्षन्तम्। यदा च सः स्वक्षेत्र हल चालयन् हलसयोजितौ बलीवर्दौ वार वार कशया मन्द मन्द ताडयन् त्वरितगत्या क्षेत्र कर्षतिस्म सहसैव तयोरेकतरो बलीवर्दो हलस्थेन केनापि काष्ठखण्डेन न जाने कथमाहतोऽ-भूत् यत् सः सद्यो भूमौ निपतितो मृतश्चेति। पतितञ्च त दृष्ट्वा कृषीवलो राजान प्रति दुर्वाक्यानि सकृदेवोद्गिरतिस्म - हन्त! किमु नास्य पाञ्चालराज्ञो हृदये निशितशल्यो भल्लः प्रविशेत् येन नः सर्वेषा समापत्तिर्दूरं गच्छेत्।

श्रुत्वाऽस्य कुवागिषून् - पुरोहितस्तत्समीप गतोऽपृच्छत्—

पुरोहित.-किमु रे ! तवैवोपेक्षया ह्यनवधानतया चायं बलीवर्दः पतितो मृतश्चेति, तदा किमर्थं राज्ञो दोष प्रलपसि । कोऽत्र तस्य दोषः, येनेत्थ राजान ब्रूषे ?

कृषक—भगवन् ! नास्ति चेद्राज्ञो दोषस्तर्हि कस्यान्यस्य भवितुमर्हति ? त्वमेव ब्रूहि । अरे ! शासको हि यदा, दु शासको भवेत्, दुष्टतया वा शासन कुर्यात्, त दृष्ट्वाथ तदीया· कर्मचारिणोऽपि, कार्यप्रभारिणोऽपि तादृशा एव भवन्ति, लुण्ठयन्ति वा लुण्ठाका इव, तदा प्रजा क शरणीकुर्यात् । दीना वा कथ जीवेयुः । मादृशाः कृषीबलाः कथ ससुख क्षेत्रे श्रम विधाय शस्यसम्पत्तिशालिनो भवेयु । किम्बहुना यथाकथञ्चित् परिश्रमेण समुत्पाद्यते - क्षेत्रेवा किमपि समुद्भवतिधान्यादिक तत्सर्व दिने तु तदीया कर्मचारिण रात्रौ च चौरा लु ठन्तिरक्षाधिकारिणश्चेति, कथ स्याद्रक्षण प्रजाजनस्येति ।

भगवन् ! किं कथयामि स्वात्मनो दु स्थिति, अद्यैव मद्गेहिनी मदर्थ भोजनाय किमपि वस्तु यथाकथञ्चिन्निर्माय त्वरित स्वात्मान गोपायन्ती, समागच्छति स्म, तदा मार्गे एव राजकर्मचारिभिर्लुण्ठिता सर्व तद्भोज्य वस्तु मद्यः समाच्छिद्याभक्षत् । हन्त, तुदन्ती सा पुनः पुन क्रोशन्ती स्वगृह प्रति प्रत्यावर्तिता । पुन सा मदर्थ न जाने कियत्समयानन्तरमानेष्यतीति, कदा पाचयिष्यति, कदा वाऽन्नदर्शनं भविता । इत्येव परिचिन्तयन्नालोकितवान् बलीवर्दयो परिस्थितिम् । तेनैवाद्य मे प्रियतर एको बलीवर्दो मृत । यदि दुष्टराज्य न स्यात् न वा राजैव दुष्ट स्यात् - तर्हि कदापि नैतादृशी स्थितिः सम्मुखीभवेत् । किमत पर ब्रूयाम् । सर्वमिद घोरमत्याचारस्यैव कार्यम् । येन वय ह्यकाण्डदुर्घटनाताण्डव चिन्ताविषदिग्ध वा कर्म पश्याम· । अतोऽहं ब्रवीमि - दुष्टराजकृतकर्म विपाकस्यैव फलमेतत् ।

ततस्तस्मिन् दिने तु तौ तस्मिन्नेव ग्रामे न्यवसताम् । परेद्युः प्रातः समुत्थाय यथा हि तौ बहिर्निर्गतौ, तथैवैको गोपाल· तयोर्दृष्टिपथ-

मुपागतः। स च गा पयो दोग्धि स्म। यदा स दोहनकर्मणि सलग्न आसीत् - तस्मिन्नेव काले गौस्त लत्तयाऽताडयत्। गवा लत्तयाताडितोऽतीवव्यथित उच्चैः चुक्रोश, हा भगवन् यथाहमद्य तीव्रलत्तया ताडितो रुदिमि, तथैवास्य पाञ्चालराजस्य वक्षसि करवालताडन भवेत्, येन दुःशासकस्यात्याचारान्मुक्तिर्मिलेत्।

पुरोहित –श्रुत्वैतद्दुर्वचन गोपालस्य भृश दुःखितः सत्वर तत्समीपमागत्य तमूचे–किमरे! भद्रपुरुष! यदि तव गौ लत्तया त्वां ताडयति तर्हि कोऽत्र राज्ञोदोषः? कथमेव प्रजानाथ शपसि!

गोपालः– कथ न शपामि त दुराचारिणम् - यदि सरक्षकाः कर्मचारिणोऽपि दुराचार विदधति, तर्हि कथ दुर्बला जीविष्यन्ति। महानुभाव! दुष्टस्य तस्य राज्ञोऽखिला कर्मचारिणस्तु ततोऽप्यतिदुष्टाः, नहि-नहि-महान्त पापा दुराचारिणश्च सद्यः समागत्य गृहेष्वस्माक प्रविश्य - यदा ते दुग्धदानशीलाः सुशीलाः गाः पश्यन्ति, महिषीव बहुक्षीराः सपद्यपहरन्ति। तर्हि कि कुर्मः। तादृशी सुशीलास्तु ता सुरभीः अपहृत्यानयन्। दुःशीलाश्च याः सन्ति, याश्च न कदापि दुग्धाः, न वा करेण कदाचन स्पृष्टा एव, विवशतया साम्प्रत दुह्यन्ते, अतः ताः लत्तया ताडयन्ति। इत्थ दैनदिन चेखिद्यमानाः सन्त्रस्ता वय राजानमेव शपाम। यदि च न स तादृशो दुराचारी भवेत्, तदीयाः कर्मचारिणोऽपि तथाभूता भविष्यन्ति। न वा - वय कष्टमिदमनुभविष्यामः। अत एव कथयामि कुवाक्यानि राजानमुद्दिश्येति।

इत्थ सर्वत्रैव तादृशी दुःस्थितिमराजकता च समालोक्य स राजा पुरोधसा सह स्वराजधानी प्रत्यागतवान्।

यदा च तौ स्वपुरमायातः स्म तदा मार्गे कस्मिन्नप्येकस्मिन् गर्ते स्थितान् मण्डूकान् कर्दमान्निष्काश्य काकाः भक्षन्ति स्म। मण्डूकराजश्च काकाना दुराचरणेऽपि, राज्ञ एव दोष मत्वा तमेव शपति स्म। तस्य तथा शपतो मण्डूकस्य समीप गत्वा पुरोहितः समपृच्छच्छापदान-

कारण तदा स प्रोवाच-यद्राज्ये नास्ति सदाचारप्रवृत्ति काकाना कृते बलिभोजनोपाय . सर्वा प्रजा पापरता भवति अतो यदि राजा सुशासकः स्यात् तदा सर्व सुकर भवेत् ।

इत्थ सर्वविध सर्वत्रैवापकीर्तिकर घटनाचक्र विलोक्य भृश परितप्तो नृपतिः शीघ्रमेव स्वराज्यशासनव्यवस्था स्वयमेव सम्पादयन् सर्वान् वा दुराचारिणः कर्मचारिणो दण्डयन् - सर्वत्रप्रसृता दु स्थिति अराजकताञ्च दूरीकृत्य म ङ्गलमय क्षेमङ्कर शासन पुन प्रसार्य सकल प्रजाजन समस्ता वा प्रकृति मङ्गलमयीमानन्द रससप्लुता विदधे । स्वयमपि सुकृतानि समाचरन् सुयश प्रसाधन राज्यसौख्यमनुभवति स्म सकलाप्रजाप्रियश्चाभूत् ।

# हृदय-सम्राज्ञी

येषा तुरुष्कवीराणा प्रखरप्रतापेन प्रतप्ता ईसामसीहोपासका-सृष्टि. परित प्रकम्पते स्म। ईसोपासकानामेव शोणितेन च अद्यापि "कुस्तुन्तुनिया" नगरस्य वीथिका रक्तरञ्जिताः, तच्छोणितप्रवाहार्द्राः प्रतिभान्ति। तदेव कुस्तुन्तुनियानगर यद्द्विशताब्द्याः पूर्वं तुरुष्काणा-मातङ्केन समन्तत समाहतमेवासीत्-तदेवाद्य तेषामेव तुरुष्काणा सद्य. स्रावितोष्णरक्तप्रवाहेण स्वहृदय शीतलयति।

सप्तति सहस्राणा तुरुष्कयोद्धृणा मृतशरीराणि "बास-फरस"-स्य तरलतमतरङ्गेषु तरन्ति, तुरुष्कसेनापतिश्चैकलक्षपरिमितसैनिकैः सहितः प्रबलशत्रुणा विजितः तैमूरलङ्ग पातशाहस्य तीक्ष्णतमतेजोऽपहृतसकलशक्तिकः, तत् सम्मुखे स्वकीयाधमभाग्यस्य निर्णय श्रोतु निबद्धाञ्जलि. समुपस्थित., आनीतश्च।

सुविशाले महारणस्थले समुपस्थापिता पराजिता लक्षमिता स्वीयशासननिगडिता रिपुवाहिनी - तस्याः सर्वतोऽग्रभागे विजिता विलुप्ततेजाः "यजदानी" नामासेनापतिः नतमस्तका साञ्जलिबद्धः समुपगतश्च। तमेव ससैनिक सेनापतिमुद्दिश्य विजयगर्वभरमन्थरया मदमत्तया क्रूरतापरिपूरितया अकरुणारुणया मर्मस्पृशा दृशा विलोक्य

सिंहगर्जन वज्रनिर्घोषमपि लघयन्निवोच्चतर स्वरेणोवाच तैमूरः- भोः भोः किमिच्छसि "जीवन" माहोस्वित् मरणमिति ।

"यजदानी" [ सेनापतिः ] अपि सगर्वं निर्भय स्वशिर समुन्नमय्य तथैवाब्रवीत् यत् ससम्मान यदि जीवन मिलेत् तर्हि वर, अन्यथा मरणमेव श्रेय । इति ।

श्रुत्वैतत् तैमूरस्य कोप सहसैव प्रचण्डाग्नौ घृताहुतिमिव प्राबल्यमभजत् । 'हूँ' "ससम्मान मिलेत्तर्हि वरम्, अन्यथा मरणमेव श्रेयः" इति तदीयमेव वाक्य पुन-पुन प्रजल्पति स्म । तैमूरः स्वभावतः एवातिक्रूर आसीत्, स च भूयसामेवाभिमानिनामभिमान चूरयामास । अनेकेषाञ्च गर्वोन्नतकन्धराणा शिरांसि नमयति स्म । स एव सम्प्रति विजयोल्लासमये समये वन्दीकृते च लक्ष सेनासमूहपरिवृते च रिपुसेनानायके, तन्मुखादेव एतादृश निर्भय वाग्व्यापार श्रोतु नाभिलषति स्म । नैवासीच्च तस्मिन् तादृग्वचनश्रवण-सहनसामर्थ्यम् । यतोहि लक्षावधि सैनिकाना जीवन तस्य मुष्टिकायामासीत्, तस्यैकस्मिन्नयनविस्फुरणे, एकस्मिन् वा इङ्गिते सर्वेषा मरण निहितमासीत् । क्षणार्धेनैव स तान् नामशेषान् कर्तुं समर्थ आसीत् । तदुपरि सेनापतेः एतादृशोऽभिमान । "ससम्मान जीवनमिति" । अस्याय स्पष्ट एवार्थ यद् दीनाना जीवन, धनिकाना, शासकाना, सामर्थ्यवताञ्च विविधभोगविलासेष्वपि वलिदान कर्तुं शक्यते सैव वारुणीपानगोष्ठी पुन समारभ्यते, तथैव च अरमिनिया काफदेश देशीया विलासवत्यो विविध-विलासोल्लाससाधनानि भवेयु इति ।

न हि, न हि, कदापि नहि तैमूरः एव कर्तु कारयितु वा प्रभु । नायम् सुलतान वायजीदस्याभिमान एतदर्थमेवात्यजत् - यत् तुरुष्काना पुन तथैव मदान्ध-स्वाधीनतायाः गर्ते इस्लामधर्मस्य नाम निमज्जयितु समुपेक्षा विदध्यात् । पुनस्तान् तथैव स्वतन्त्रान् वा कुर्यात् । यद्येव चेत् तर्हि समेषामेषामेतादृशो रक्तपातस्यावश्यकता

निष्फलैव स्यात्। नाय मानवाना रक्तप्रवाह, सगीतरसप्रवाह इव मनोहर। नैवाय मनोविनोदकर न च नयनानन्दवर्धन, न वा रङ्गमञ्चोपरि प्रदर्शितोऽप्सरसा नर्तनोल्लास इव सुखाकर अयन्तु महारौद्रतरो बीभत्सो महाभयानकश्चेति। यञ्च दृष्ट्वा क्रूराणामपि हृदयानि विचलितानि भवन्ति। निर्घृणानामपि चेतासि द्रवीभवन्ति। चक्षूषि परावर्तन्ते, न शक्नुवन्ति तद् दृश्य द्रष्टुमपि। तैमूर न तादृक् हिंसको वन्य पशु यो ह्येतादृशी निष्करुणामयी क्रूरतमा हिसा-विग्रहा घटना विलोकयितु पुन पुनरपि समुत्सुको भवेत्। स्वजीवन वा तस्मिन् क्रूरतमे कर्मणि नियोजयेदिति।

स स्वशब्देषु धिक्कार सम्भृत्य प्रोवाच—यत् त्वम् ससम्मानं जीवन मनुषे तन्नारकीयमेव जीवनम् महत्पाप, अपराधश्चेति।

यजदानी तु जानाति स्म यत् तैमूरो दया क्षमा वा कर्तु जानात्येव नवेति तत क्षमाया दयायाश्चाशापि स्वप्नमात्रम्। सेनाध्यक्षो निश्चिनोति स्म यत् तस्य तदीयसैनिकाना च प्राणा कथमपि न स्थास्यन्ति सम्प्रति सर्वेषा जीवनलीला क्षणार्धेनैव समाप्तिमेष्यतीति तदा किमर्थं तस्य क्रूरकर्मणोऽनुनय विनयं वा कुर्यादिति—कथ न स्वप्राणान् करतले धृत्वा निर्भय स्वमनस्था त प्रति घृणा स्पष्ट प्रकाश-येत्। एतत्पूर्वं एकवार स परावृत्य कातरभावेन त रूपसम्पन्न युवक प्रति सकरुणाश्रुकणलोलाभ्या सकृन्निरीक्षितवान् योहि पृष्ठभागे स्थितः स्वकीययौवनतुरङ्गम सुदृढ संयमरज्ज्वा स्ववशे कुर्वन्नास्त।

शाणोत्कषणकाले शस्त्रसघर्षणान्नि सरत्स्फुलिङ्ग जालमिव तस्य यून प्रत्यङ्गलोमराजिभ्य क्रोधविस्फुलिङ्गमाला नि सरन्तीव प्रतिभाति स्म। यजदानी सेनापति तस्य मुखमवलोक्य कोषान्नि-सृता खड्गलतां पुनः कोषान्तरितामकरोत्। शोणितस्यैव घुण्टिका निपीयावदत्—सम्राट् सप्रति विजयोल्लासोद्धतकन्धर सगर्वभर-मन्थर इव प्रतिभाति किन्तु यद्यपराध क्षमारूपे परिणतो भवेत्

तर्हि यत् कथनीय चेत् कथयामि—यद्धि स्वजीवनविषये तुरुष्कास्तु तातारियेभ्य कमप्युपदेश ग्रहीतुमावश्यकमेव न मन्वते। परञ्च यत्र परमात्मना ” वर्षा कृता तत्र तदुभोगोऽपि यदि न क्रियेत् तर्हि जन्तो अज्ञता कृतघ्नता च। यदि करवालस्फालनमेव सभ्यतायाः सीमा, प्रमाणम् वा स्यात् तर्हि "गाल" ज्ञातेया रोमनदेशीयेभ्योऽप्यधिका सभ्या भवेयु। इति।

अस्योपरि तैमूर अत्युच्चैर्जहास। तत्सैनिकाश्च सद्य स्व-स्वकरवालकुल करसस्थित व्यदधु। तदानी तैमूरस्य हासस्तु मृत्योरेव हासः समभूत् कि वा वज्रपातस्य निर्घोष' अब्रवीत् च स "कि भोः ? तातारस्था पशवः किमु ?"

नाहमेतत् कथयामि।

"त्वमेव कथयसि ईश्वरो युष्मान् आनन्दभोग-विलासान् समुपभोक्तुमेव ससर्ज। परन्तु-अहम् कथयामि-अय हि भ्रम। ईश्वरो हि जीवान् स्वचरणारविन्दपरागसेवनायैव, स्वभक्ति समुपासना वा कर्तुं कारयितुञ्च जनयामास। एतद्विपरीत च यश्चलति यो वा किमपि करोति स• कृतघ्न पातकी नरकगामी च भवति। अस्माक-पाक-धर्मप्रवर्तक अस्माक जीवन पाक (पवित्रतमम्) कर्तुम् एव प्रवृत्त समुद्भूतश्च, अस्माश्च सत्य मानवान् निर्मातु अवतरितवान् न खलु अस्मान् अधर्माचरणे नियोजयितु, तदनुकूला वा दीक्षा दातुम्। [ आत्मान हस्तचेष्टया निर्दिशन् ] अय तैमूर• ससार अस्माद् भ्रमात् मिथ्यादुर्भावनाभ्यश्च निष्काश्य सत्यपथि समानेतुं निजकर्तव्य मत्वा प्रतिज्ञा कृतवान्। पाकधर्माचार्यचरणाना शपथ धृत्वा भणामि यत् नाह निर्दय न वा अन्यायी, न च हिसकः किन्तु धर्मविपरीताचरणस्य दण्डस्तु अस्मद्धर्मे मृत्योर्ऋते नान्य• कश्चनान्यो दण्ड•। इति ममापि धर्मसम्मतो न्यायः।

स च तदानीम् स्वशालभद्र प्रति–यो हि तत्सेनाध्यक्ष आसीत्-नृशसदृष्टयाऽपश्यत्. तत्क्षणमेव एको महाभयङ्करः दैत्याऽऽकार पुरुषः करवाल झटिति करतलीकृत्य "यजदानी" तिनाम्नः तुरुष्कसेनापतेः सिरस्युपर्य्येव समागतः। तातारी-सेनाऽपि स्व-स्वकरवाललता कोषान्नि-ष्काश्य तुरुष्कसेनायाः उपरि न्यपतत् क्षणेनैव निःशस्त्रीकृतरिपुवाहिनी-वीराणा वन्दीभूताना शिरासि भूमौ न्यपतन्। शतशः सहस्रशः कायनि-काय प्रास्पन्दत पृथग्भूतस्वस्वशिरोऽन्वेष्टुमिव भूतले। प्रावहच्च शोणित-प्रवाहः वीरकबन्धेभ्यः।

[ २ ]

सहसा स एव रूपयौवनसम्पन्नो युवा, यो हि यजदानीपृष्ठभागे समुपस्थित आसीत् अग्रेसरीभूय तैमूरस्य सम्मुखे समायातः। मन्ये मृत्युं स्वात्मनो निबद्धमुष्टियुगले चूर्णयन्निव निर्भय तैमूर गर्हयन्निव प्रोवाच–भो भो स्वात्मान निजधर्मधुर यवनमन्य! पातशाह! किमेष एव हि ते इसलामधर्मः? यस्य प्रचाराय प्रसाराय त्व प्रतिज्ञामकरोः। एषैव किमु इसलामधर्मस्य शिक्षा? यत् त्व निःशस्त्राणा वन्दीभूतानाम-सहायाना वीराणामित्थ निष्करुण हत्यां कारयित्वा तेषा निरपराधाना रक्तप्रवाहेण मही रञ्जयसि? ये हि स्वस्वामिन स्वदेशस्य च सम्मा-नार्थं स्वप्राणापणेन च सहायतार्थं वा समचेष्टन्त। एषैव ते वीरोचिता नीतिर्धर्मो वा।

सहसैव समन्तात् स्तब्धता प्रासरत्। एको युवक यस्य सम्प्रति न सम्यगवयवेष्वपि यौवनोद्गार परिपूर्ण सम्भृतः, नाधुना सम्यग् बुद्धि-परिपाको वा वाचि समागतः, न वा समीचीन पर्य्याप्त वा मनसि गाम्भीर्यमपि समायातम् स एव तैमूरसदृश तेजस्विन प्रभावशालिनो महामहाक्रूरसत्वस्य पातशाहस्य सम्मुखे इत्थ गतभी स्पष्टाक्षरै तिरस्कारं कुर्यात्? इत्थमनर्गल वदत तस्य तालुमूलाज्जिह्वा न निःसारिता समु-त्पाटिता स्यात्? सर्वे स्तब्धा, चकितचकिता आसन् तैमूरोऽपि स्तब्धः आसीत् स च सम्मोहित इव तिष्ठन् युवक निर्निमेष पश्यन्नेवास्ते।

युवा च परावृत्य तातारिसैनिकान् लक्ष्यीकृत्य येषा मुखमण्डले कुतूहलमय प्रोत्साहन प्रस्फुरदासीत्-अवदत्-एतान् यवनवीरान् त्व कृतघ्नान् धर्मपरिभ्रष्टान् मनुषे ? निरपराधान् एतान् घातयित्वा, इसलामधर्मस्य ईश्वरस्य सेवा करोषि ? धिक् त्वाम् ? त्वामह पृच्छामि किमरे य एते हि महापुरुषा परमात्मान विहाय न कमपि प्रार्थयन्ते नान्यस्य भजन कुर्वन्ति, सर्वस्वमेव स्वधर्मपरिपालन मन्यन्ते, प्राणधनैरेव इसलामधर्म परिसेवन्ते - यद्येतेऽपि न इसलाममतानुयायिनो यवनाः, तर्हि के नामान्ये लोके एतेभ्योऽप्यधिकाः यवनाः ? अस्तु-कथयाम्यहम्, तव कथनानुसार यदि वय धर्मविमुखाः स्म पथभ्रष्टा वा, तथैव मनुष्व, तथापि वय भवदीयाः स्मः इति तु मनसि स्वविवेकबुद्ध्या विचिन्तय ! किमरे - इसलामधर्मस्य सुदृढश्रृङ्खलाभिर्निबद्धा सम्प्रति ते वन्दीभूताः निःसहाया निःशस्त्रा वा साञ्जलिबद्ध त्वत्सम्मुखे समुपस्थिताः निरपराधा इमे वराका निरर्थक किमर्थमेते मृत्युमुखे निपात्यन्ते ? किमेतादृश्या परिस्थितौ निपतिताना सर्वात्मना करगतीकृतानामपि विहिसनस्यानुमति प्रयच्छति किमु ते इसलामधर्मः ?, यदीश्वरः त्वा शक्तिसम्पन्न व्यधात् तवहस्ते जनशासनसूत्र रक्षितवान् - प्रजापालन, राष्ट्ररक्षणभारस्त्वयि निहितो भगवता - किमेतदर्थमेव, यत् त्वं तदनुयायिना विपद्गताना प्राणापहरण कारयित्वा एतेषा शोणितेन भूमि शोणिता कुर्या ? अरे ! सापराधानामपि हत्या कृत्वा, तान् सत्यवर्त्मनि नेष्यसि किमु ? क्षण निजकृत्येष्वपि स्वविवेकपुरःसर किञ्चिद् दृष्टिपात कुरु, यत् कीदृक् निष्करुण निर्घृण सप्तति सहस्राणा वीराणाम् सुरङ्गाग्निप्रक्षेपण द्वारासुविश्वासघातपुरःसर संहार कृतवान्, (कारितवान्) तेषा च मुग्धान् दुग्धमुखान् बालकान् अनाथान् कृतवान् निरपराधाश्च तेषा कुलाङ्गना विधवा कारिता ।

एतदर्थमपि कदाचिदनुमान कृतम् ? किमेतादृशानि कर्माणि-कुकृतानि वा भवतः क्षेमकराणि सन्ति, यानि सगर्व समाचरन् त्व

स्वात्मान सत्य मुसलिमधर्मानुयायिन मनुषे धर्मध्वज वाऽवगच्छसि ? किमस्यहिंसाकाण्डस्य बलेन, किमनया निर्घृणतया, निरपराधाना रक्तपातरूपिण्या लेखनसामग्र्या (कृष्णमस्या) जगति स्वर्णाक्षरैः स्वनामोल्लेखन कारयित्वा स्वयश स्थापयितुमिच्छसि। एतादृश्यैव वा कुकर्म कृष्णमस्या स्वशुभ्र यशो विस्तारयितु कामयसे ? पश्य, एतेषा तुरुष्काणा शोणितमहानद - प्रवाहे त्वम् त्वदीयाश्वाना खुरानेव न केवल रञ्जितवान् - अपितु धर्मविरुद्धाचरणेन - स्वकीय - इसलामधर्मस्यापि मूलोच्छेद कृतस्त्वयेति विचिन्तय।

एष वीरवरतुरुष्काणामात्मोत्सर्गस्यैव प्रभाव, यत् यूरोपप्रदेशेऽद्यापि इसलामधर्मस्य प्रकाश प्रसृत प्रतिभाति। अद्य सोफियास्थे-गिरिजागृहे "अल्लाह - अकबर" स्य ध्वनि श्रूयतेऽर्हनिशम्। समस्तोऽद्य यूरोपदेश इसलाम धर्मस्य सम्मान कर्तुमुद्युक्तोऽस्ति। किमेतानि-कृत्यान्येतदर्थमेव, यदेतेषामेतादृश पारितोषिको मिलेत् [यत् एते नि शस्त्रा व्यर्थमेव, क्षमायोग्या अपि पशुवत् विहिंसिता स्यु] अह कथयामि यदेना विचारधारा स्वहृदयान्नि सारय यत्त्वम् इत्थ निरप-राधाना रक्तपातेन इसलामधर्मस्य सेवा करोषीति।

त्वमपि कस्मिन्नप्येकस्मिन् दिने परमात्मन सम्मुखे स्वकृताना दुष्कृत्याना समुत्तर दातु समुपस्थितो भविष्यसि। स्वदुष्कृत-परिपाक समुपभोक्तु च विवशो भविष्यसि, तदानी न ते किमपि कथन श्रोष्यते न वा कृतकर्मणा स्पष्टीकरणे काचन युक्तिः श्रोतव्या भविष्यति। यदि त्वय्यद्यापि किम् सत्कर्म, किमसत्कर्मेति विवेकिनी बुद्धिरस्ति, तर्हि स्वमन पृच्छ। यत् त्वमेनम् नरसहार परमात्मन प्रीत्यै कृतवान्, उताहोस्वित् स्वमनःकामना पूरयितुमिति। अहमनुमिनोमि यदस्य समुत्तर मिलिष्यति तेन त्वदीय शिरो लज्जावनत न पुनरुन्नत कर्तुं त्वम् शक्ष्यसि।

अधुनापि तैमर स्वशिरो नमयन्नेवासीत्। तदानीमेव स यजदानी [वन्दी सेनापतिः] प्रकम्पितेष्वेव शब्देषु निवेदयामास-महाराजाधिराज !

अय ह्यस्य भवत्किङ्करस्य तनयोऽस्ति। अस्य मस्तिष्के ह्यस्ति काचन विकृति। क्षन्तव्याऽस्येतादृश्यनर्गलभाषण परिपाटी। अह स्वयमेव समुपस्थितोऽस्म्यस्या परिणामस्वरूप दण्ड समुपभोक्तुमिति।

तैमूरस्तु तस्य युवकस्य मुख प्रति निर्निमेषया दृष्ट्याऽवलोकयन्नासीत्। अद्य स्वजीवने प्रथमवारमेवैतादृशी निर्भीक-शब्दरचना तस्य श्रवणविवरे प्रविष्टाऽभूत्। अय हि प्रथमावसरः, तादृक् निर्भीकपुरुषपरिचयस्यासीत्। तत्सम्मुखे महामहान्तः सेनापतय, महामहामन्त्रिण सम्राजश्च न किमपि वक्तु प्रभवोऽभूवन्। स हि यत् किमप्यकथयत् स एव न्याय परिगणितोऽभूत्। न तत्र काचन कस्यचनेहापोहस्यावश्यकता। नासीत् कस्मिन्नपि शक्ति य कमपि कुतर्कम् तत्र समुपस्थापयेत्। सर्वदा तदीयकथनस्य, तत्कृतस्य वा कर्मण सर्वात्मना स्वीकृतिरेव तस्याहम्मन्यता द्विगुणितामकरोत्। स च स्वात्मनि विश्वासमकरोत् यत् तम्, ईश्वरः ससारे इसलामधर्मस्य प्रवर्तनाय प्रसाराय च भूतले प्रेषितवानिति। यद्यपि स स्वात्मनि धर्माचार्यन्तु नामनुत, किन्तु धर्मप्रवर्तकत्वभावना तु सुस्थिरैवाभूत्। अतएवाद्य यदाऽयमेको युवा स्वप्राणाना मोह परित्यज्य तस्य कीर्तेः प्रतिरोधिनी यवनिका दूरीकृतवान्, तदानी तस्य चेतना प्रस्फुरिताऽभूत्। तस्य मनसि-क्रोधस्य - हिसायाश्च स्थाने तस्मिन् [त युवक प्रति] श्रद्धायाः समुदयः समभूत्। यद्यपि तस्य सकृन्नेत्रविस्फुरणमेव तस्य युवकस्य जीवनलीला समापयितु पर्य्याप्तमासीत्, किन्तु न स तथा कृतवान्। तस्य जगद्विजयिन्या शक्ते समक्ष क्व वराकोऽय दुग्धमुखो बाल स्व स्व लघुहस्ताभ्या महत्पारावारस्य प्रबल प्रवाह परिरोद्धु पारयेत्। कीदृश यूनो हास्यास्पद ससाहस विचेष्टितमासीत् - किन्तु तस्मिन् तादृशि विचेष्टिते कियानात्मविश्वासः सम्भृत आसीत्। तदानीमनुभतवाँश्च तैमूर', यत् स नि शस्त्रस्याप्यस्य यून समक्षे सशस्त्रः ससैनिक सम्प्रति यथेच्छमनुग्रहाऽवग्रह-समर्थोऽपि स्वात्मान निर्बलमेवामन्यत। यतो हि मानवेषु तादृक्साहसस्यैक एव स्रोत सम्भवति, यत्,

सत्ये निश्चलो विश्वासः। सहसैव तस्यात्मा तम् तैमूर तस्य युवकस्यालिङ्गनार्थ अधीर समुत्सुकं च कलयामास। स च तैमूरः नासीदाधुनिको योहि सत्येऽपि कुतर्कशङ्का कुर्यात्। स हि सरलः सैनिकः आसीत् यो ह्यसत्यमपि स्वात्मविश्वासेन सत्य साधयेत्।

यजदानी पुन. तेनैव स्वरेणावदत्—सम्राट्! अस्यानर्गलभाषणे नावधान ददातु स्व.मी।

तैमूर. सद्यः स्वसिहासनादुत्थाय - यजदानी रिपुसेनापति स्वबाहुभ्यामालिङ्ग्य कण्ठे सलगय्य, सस्नेहमुवाच, "मैव वद मित्र!" एतादृशमनर्गल-भाषण यदि इत पूर्वं श्रवणपथमानीतञ्चेत् नाधुना ह्येतन्निरपराधाना निष्करुण विहिसनमपि दृष्टिपथमपावन कुर्यात्। न वैषा निरर्थकी हिसा मम गले निपतिता स्यात्। अहन्त्वस्यानर्गल भाषणे कस्यचन भगवद्दूतस्य सन्देश, अभूतपूर्वं वा ज्योति पश्यामि, अलौकिकी वा प्रेरणा समुपलभे। या हि मादृशो भ्रष्टपथस्य मदान्धस्य समुद्धाराय सत्य मार्गं प्रदर्शयति, प्रेषिता च करुणावरुणालयेन भगवता। प्रिय वयस्य! भवान् भाग्यशाली॰ यो हि एतादृशं ईश्वरीयदूतमिव सुसन्तान लब्धवान्। किमहमस्याभिधेय प्रष्टु शक्नोमि?

यजदानी प्रथम अन्यधर्मावलम्बी आसीत्, अनन्तर यवनः [इसलामधर्मानुयायी] समभवत्, किन्तु अद्यापि यदाकदाचन तस्य मनसि विविधाः शङ्काः समुदयन्ति, यत् किमर्थं स इसलामधर्मं स्वीकृतवान्। यो हि वन्दी मृत्युपाशे पतितः शुष्कप्राणः आसीत् यत् क्षणार्धेनैव मृत्युना निगीर्णो भविष्यतीति - तस्मिन्नेव क्षणे सः केनापि भगवत्प्रेरितेनालौकिक पुरुषेण सद्यः समुत्थाप्य स्वाङ्के धृतः एवाभवत्।

सः गद्गदस्वरेणावदत् -

भगवन्! त हबीबनाम्ना समाह्वयन्ति जनाः।

श्रुत्वैव तैमूरः तस्य यूनः सम्मुखे गत्वा तस्य कर गृहीत्वा तञ्च स्वनेत्राभ्या परिचुम्ब्याब्रवीत्—अयि मम:तरुणवयस्य! त्व सत्यमेवेश्वरस्य

सन्देशवाहकोऽसि, अहन्तु सैवापराधकर्ताऽस्मि योहि सर्वदैव स्वापराधानपि सर्वथाऽऽचरणीयानि सत्कर्माण्येवाजानात्। अतएव सर्वे मामजातदुष्कर्माणमेव, अनालम्बितकुकर्मपथमेव वा कथयन्ति स्म। अद्य मयाऽवगतम् यत् इसलामधर्मस्य कियती हानिर्मद्धस्तादेव विहिता मयेति। अद्य प्रभृति भवद्धस्तावलम्बन करोमि, त्वमेव मे सन्मार्गदर्शको ज्ञानगुरुः सदुपदेष्टाऽसि। अहम् विश्वसिमि यद् भवतोऽनुग्रहेणैव परमात्मनः सामीप्य लप्स्ये। तदनुकम्पापात्रञ्च भविष्यामीति।

इत्थ कथयन् युवकस्य तस्यानने यदा हि स दृष्टिपातमकरोत् सहसैव तस्य यूनोमस्तक लज्जयाऽवनतमभवत् लज्जाया शोणिमा तन्मुखोपरि प्रासरत्। तदानी युवकस्य वदने कठोरतायाः स्थाने माधुर्य्यं सङ्कोच. मार्दवम् प्रतिभाति स्म।

युवको नतमस्तकः सन्नुवाच—भगवन्! एषा भवतोगुणग्राहिता, यत् अयोग्योऽपि योग्यतमः प्रतिभाति, अन्यथा क्व मयि तादृशी योग्यता।

तैमूर. त समाकृष्य, स्वपार्श्वे सिंहासनैकदेशे स्थापितवान्। आज्ञापयच्च स्वसेनापतिम्—"सद्यः स्ववन्दीभूतान् सर्वान् तुरुष्कसैनिकान् बन्धनान्मोचय, तेभ्यो गृहीतानि शस्त्रास्त्राणि पुन प्रत्यावर्तय-यावान् वा धन-रत्नराशिस्तेभ्योऽत्र समानीत, सोऽपि समस्तो विभज्य प्रत्येकस्मै वितरणीय एव।

प्रधानमन्त्री तु सम्राजः आदेशानुसार यथादिष्टा व्यवस्थामकरोत्। अत्र च तैमूरः [सम्राट्] हबीबनामान युवान हस्तेन हस्त गृहीत्वा स्वकीयशिविरे समानीतवान् उभयोश्च (सेनापति-हबीबयूनोश्च) प्राधूर्णिकयो. सम्मानार्थं प्रीतिभोजस्य व्यवस्थाञ्च विदधाति स्म। यदा हि प्रीतिभोजः सम्पन्नः समभूत्, तदा सः क्रमशः स्वजीवनसम्बन्धिनीमशेषा कथा सगद्गद साश्रुनिर्झरम् श्रावयामास। समस्ताञ्चैनां दुर्घटनामित्थ भ्रमेण कृतवान्-यत् सः ईश्वरीयाऽऽदेशस्यैव पालनं

करोति। परञ्च – विचिन्तयति स.–, यत् कथ स सम्प्रति कलङ्किन स्वमात्मान भगवत सम्मुख नेष्यति - कथङ्कार वा स्वमुख भगवन्त दर्शयिष्यतीति विचिन्त्य–भृश रुरोद। रुदतश्च तस्य कण्ठात् शब्दोऽपि न निःसृत.।

अन्ते रुदन् सः हबीबमुवाच–अयि मम नवयुवकवयस्य! सम्प्रति त्वमेव मे नौका परम्पार प्रोत्तारयितु समर्थोऽसि। भवानेव मा सत्पथं दर्शितवान् अतस्तत्पद प्रापयितुमपि मा भवानेव प्रभुः। इदञ्च मम साम्राज्य भवानेव सम्प्रति सम्भालयितु शक्त.। अधुनाऽह प्रतिबोधितो प्रबुद्धश्च विचिन्तयामि यदहम् तन्मे साम्राज्य विनाश वर्त्मनि नयन्नासम्। अतो भवन्त प्रार्थये यत् भवानेव तत्सञ्चालनसूत्र स्वकरगतीकरोतु। आशास्यते च निषेधमुद्रया न मा निराशागर्ते पातयिष्यति भवान्। अन्यथाऽहमुभयतो भ्रष्टो भविष्यामि। इति।

यजदानी निवेदयामास–स्वामिन्! एषा हि भवता समुदारता, परमगुणग्राहिता, भूयाननुग्रहश्च। किन्तु बालोऽय नाधिकवयाः अय हि एतावन्त मन्त्रिपदस्य कार्यभार सम्भालयितुं नालम्। साम्प्रतन्त्वस्य शिक्षादीक्षयोः समयः।

इतो निषेधः प्रासरत्, परन्तु ततस्तदर्थमाग्रहः प्रोज्जृम्भयते स्म। यजदानी निषेध तु करोति स्म, परञ्च, प्रसादचिह्नानि विलोक्य तस्य हृदये हर्षोल्लासोऽपि न माति स्म। यथा 'मूसा' महोदयोऽग्नि समानेतुं गत., ईश्वरीयदूतत्वपदवीञ्च लब्धवान्" तथैवाय मृत्युमुख गच्छन् साम्राज्यस्य मन्त्रिपदमवाप्तवान्। किन्तु सहैवास्य मनसि चिन्ताऽपि शङ्कापि समभूत् - यद्, चञ्चलचेतसोऽस्थिरविवेकस्य को नाम विश्वासः अद्य यदा प्रसन्नः, सर्वस्व दातुमुद्युक्तः, परञ्च दुर्दैवात् कदाचन रुष्टः स्यात् सद्योजीवनान्मुक्तिमपि दातु न विलम्ब करिष्यतीति। तथापि हबीबस्य प्रतिभाप्रागल्भ्येऽपि विश्वास. आसीत्, यत् सः स्वकार्ये सफल

एव सिद्धो भविष्यतीति। तथापि भयमासीद् यत् प्रदेशे, परदेशे वा कीदृशी घटना विघटेतेति। यतो हि राजचक्रे परस्पर षड्यन्त्राणामपि प्राबल्य भवत्येव। हबीबोऽपि बुद्धिमान्, समयज्ञः। व्यवहारदक्षोऽप्यस्ति परञ्च क्वाधुना वयस्कृतोऽनुभवस्तस्मिन्। इति। इत्थ विचिन्त्य, प्रश्नोपरि विचारार्थ समयमहोरात्रमितमयाचेता, तौ यजदानी-हबीबश्चेति।

( ३ )

अथ हबीबः, यजदानी नाम्नः सेनापतेः पुत्रो नासीत् अपितु पुत्रीयमासीत्। तस्याः नाम उम्मतुल्हबीब आसीत्। यदा हि यजदानी तस्य च पत्नी इसलामधर्म स्वीचक्रतुः, तदानी तस्याः कन्यकायाः वयः केवल द्वादशवर्षात्मकमासीत्, किन्तु प्रकृतिः, तस्यै बुद्ध्या प्रतिभया च सहैव विचारस्वातन्त्र्यमपि प्रायच्छत्। यावत् मा सत्यासत्ययो निर्णय परीक्षा वा न करोति स्म, न तावत् सा कामपि वार्ता स्वीकुरुते स्म। स्वपित्रोः स्वधर्मपरिवर्तनेन तस्याः मनस्यशान्तिस्तु समभूत् परन्तु यावत् यवनधर्मस्य सम्यगध्ययन सा न चकार, न तावत् केवल स्वजननीजनकयोः प्रसन्नतायै इसलामधर्ममङ्गीचक्रे न च तस्य दीक्षैव गृहीना। पितरावपि न तस्या तदर्थमाग्रहिणाबभूताम्। तौ अचिन्तयताम् - यत् तौ स्वधर्म परिवर्तयितु स्वतन्त्रौ तथैव सा बालिकाऽपि स्वधर्मं पालयितु सर्वथा स्वतन्त्रैवेति तस्याः अपि स्वधर्मोपरि सुदृढीभवने पूर्णोधिकारः। कन्यकायाः हृदये सन्तोषः समभूत्, किन्तु सा परम्परागतस्य "जरतश्त" धर्मस्य नवगृहीतव्यस्य च इस्लामधर्मस्य तुलनात्मकमध्ययन कर्तुमारभत, पूर्णवर्षद्वय यावत् परीक्षणमन्वेषणञ्च कृत्वैव सा इसलामधर्ममुररीकृतवती। तदानी तस्याः पितरौ परमानन्दमग्नावभूताम्। यतो हि तयो कन्या न कस्याप्याग्रहेण त धर्म स्वीचक्रे, अपितु स्वय सम्यक् विविच्य स्वेच्छया - पूर्णाध्ययनानन्तर सत्यभावनयेति। या हि वर्षद्वयाच्छङ्का तयोश्चित्ते प्रविष्टा ह्यासीत् साऽधुना दूरगता।

यत्तदानीत्यस्य कोऽपि पुत्रो नासीत्, सोऽपि तस्मिन् युगे यदा हि करकरवाल एव मनुष्यस्य सर्वोच्चन्यायालय आसीत्; तदानी पुत्रस्याभावः ससारे सर्वतोऽधिक दुर्भाग्यमासीत्। अत. अय हि स्वतनयसम्बन्धिनी कामना, स्वपुत्रप्रयुक्त स्वात्मनो वात्सल्यञ्च, अस्यामेव कन्यकाया प्रसार्य स्वात्मनि सन्तोषमधारयत्। पुत्रवदेव तामपि रक्षितवान्। तस्याः शिक्षायाः दीक्षायाश्च प्रबन्धोऽपि तद्वदेव कृत.। तस्याः वेषभूषादिकमपि पुरुषोचितम् पुत्रानुरूपमेव स. कलयामास। सापि पुत्रवदेव सर्व पठनपाठनादिकम् अश्वारोहणादिकम्, शस्त्रास्त्रसञ्चालनशिक्षाग्रहणादिकञ्च कृतवती। प्रायः सा स्वपित्रा सहैव समस्तराजसेवादौ, राजसभायाम् राजभवनेषु गच्छन्ती सर्वविध कार्यं स्वबुद्धिविषय करोति स्म। राजकुमार्या सहैवाखेटेऽपि (आखेटाय) गच्छति स्म। सहैवानेन कर्मणा सा काव्यदर्शनाध्यात्मविज्ञानादीनामप्यभ्यासमकरोत्। षोडशे वर्षे तु सा सैनिकशिक्षणसस्थाया प्रविश्य वर्षद्वयाऽभ्यन्तरे एव स्वमनोयोगेन सर्वोच्चतमा सैनिकपरीक्षा समुदतरत्। सद्यश्च सेनाया स्वयोग्यतानुरूप पदमपि लब्ध्वा स्वराष्ट्रसेवा करोति स्म। शास्त्रविद्याया, सेनासञ्चालनकर्मणि तु सा सिद्धहस्तैवासीत्। तस्याश्चरित्रबलेन च तत्रत्यः सम्राडपि पूर्ण प्रसन्नः प्रभावितः समभूत्। प्रथमावसरे एव ता सहस्रसैनिकाध्यक्षपदे नियोजितवान्।

एतादृश्याः युवत्याः प्रेप्सूनान्तु कुतो नाम न्यूनता ? तया सह शिक्षा प्राप्तवन्तो विशिष्टपदासीनाः, बहवो राजकुमाराः, नवयुवकाश्च ता लब्धुकामा प्राणपणेनापि चेष्टन्ते स्म। किन्तु न कोऽपि तेषु राजकुमारो युवा वा जनो दृष्टिपथमारूढस्तस्याः। अहर्निशमेव तस्याः विवाहप्रस्तावाः समायान्तिस्म, किन्तु सा न कस्यापि प्रस्तावमुररीकुरुतेस्म। प्रायो वैवाहिकजीवनयापनमेव न तस्यै रोचते स्म। यतो हि सा स्वाधीनप्रकृतिप्रिया, स्वतन्त्रविचारा न बन्धनमपेक्षते स्म। प्रत्यहञ्च व्यलोकयत्, यत् रमण्यः कियती मनःकामना कल्पयन्त्यः

कास्कान् वा मनोरथान् पुरतः कृत्वा विवाहबन्धने निबध्नन्ति। आनीयन्त च जनैः राजभिश्च, पुन क्षणिककालिकसुखमनुभूय राजप्रासादमये कारागारे एव स्वजीवनशेष यापयन्ति। तासा वा भागधेयमपि तत्तत्पतिदयाधीनमेव भवति।

प्राय. सा सम्भावितकुलस्थाभिः विशिष्ट शिष्टजनमहिलाभिः सह परस्पर वार्तालापस्याप्यवसरमलभत। तासा मुखाच्च स्व-स्वकरुणकथां दाम्पत्यजीवनमयी श्रुत्वा, वैवाहिकपराधीनतामयी घटना वा श्रावं-श्राव तस्याः मनस्यधिकाऽधिका घृणा पाणिग्रहणादिविषये समपद्यत। तस्या' जनक यजदानी, अपि न तत्स्वातन्त्र्ये हस्तक्षेपमप्यकुरुत, न वा काञ्चन बाधा वा समुपस्थापयति स्म। यदि कश्चन तत्पितर बाध्य-मपि करोति स्म तदानी स. समुदतरत्—यत् सा स्वाधीना, स्वविवाहादि-सम्बन्धे सा सर्वतन्त्रस्वतन्त्रा, नाह किमपि कथयितु शक्तः। यदि सा इच्छेत् विवाह कुर्यात् नान्यथा, कुमार्येव तिष्ठेत्। इति।

यद्यपि सा कुमारी युवती रात्यपि पुरुषवेशेणैव सर्वदा तिष्ठति स्म। पुरुषवेष धृत्वा, नाना युवभि. सह सर्वदा समालाप-सहवासादिकञ्चापि जनसमाजे समालोचनाया विषय आसीत्, किन्तु यजदानी तस्य पत्नी च, उभावेव पितरौ तस्या सच्चारित्र्ये सतीत्वे च पूर्णविश्रब्धावास्ताम्। ह्बीबस्य व्यवहारे, आहारे, विहारे, आचारे वा न कदापि कुतोपि, कथमपि कुलमर्यादावैपरीत्य कर्म समपश्यनाम्। येन तयोर्मनसि काचन-शङ्काऽपि नोदीयाय।

यौवनस्य झञ्झाया, कामनाना च प्रोच्छलत्पारावारेऽपि सा चतुर्विंशतिवर्षवयस्का वीरबाला-स्वचारित्र्यसम्पत्ति, सयमधनकोषञ्च सुरक्षितमक्षय्य, शाश्वतिकी सम्पदामिवाऽखण्डब्रह्मचर्य्यं ओजश्च बिभ्रती तथैवाविचला सुदृढैवातिष्ठत्। मन्ये सर्वं एव तदानीन्तनो युवकसमाजः तस्या सहोदरभ्रातैवासीत्।

कुस्तुन्तुनियानगरे कियन्तो महोत्सवा समुल्लासा वा समभवन् । हबीबस्य च कियान् सत्कारः सम्मान स्वागतञ्च समभूत् । अनेकानि च वर्धापनानि तदर्थं प्रेषितानि, मिलितानि, सर्वमेतन्न किमुल्लेखनीयम् । अशेषनगर यन्न शोन्मुखमासीत्, यत्र चाशुभाविनी महती विपत्ति, भयङ्करी वा विद्रोहमहद्युद्धोद्भवा वाऽनलज्वालावली सकल सहर्म्याट्टालिक नगर ग्रसितु विस्फारितमुखीवासीत्, अखिल राष्ट्रमपि विप्लवमुखमग्नमिवासीत्, तत्सर्व सकुशल, निरुपद्रव, विगतभय कुर्वत्यास्तस्या. मानवमूर्त्या यावत् यत्किमपि वा सम्मानादिक क्रियेत, तत्सर्वमपर्य्याप्तमेवाऽऽसीत् । एतादृशी अपूर्वा महाशक्तिः साक्षान्मानवरूपिणी केषा न नयनानन्दयित्री समभूत्, केषा वा हृदयोल्लासिनी न जाता, केषा वा श्रद्धाया प्रेम्णः समुल्लासस्य भाजन नाभूत् । तदानी हबीबस्योपरि कियती कुसुमवृष्टि, प्रणयपुष्पाणा, अमूल्यरत्नाना च वर्षणमभूत्, इत्यस्यानुमान, कल्पना कर्तुं तु कवय एव समर्थाः भवितुमर्हन्ति, किम्बहुना नगरनिवासिन्यो हर्षोद्गारसमुल्लासिन्य सर्वदैव निभृत निजनिजपतिपुत्राद्यालिङ्गनसौख्यानुभवहृष्टहृदयाः सहृदयाः कान्तकामिन्यस्तु प्रतिक्षणमेव त तादृगशान्तिसौख्यविधातार धातारमिवापर शुभाशसनै. विविधाशीः परम्पराभिरभिनन्दयन्ति स्म । नगरनिवासिनोऽपि त सबहुमान श्रद्धासुमनोऽञ्जलिभिरर्चयामासुः । सर्वा च तत्रत्या प्रकृतिस्त विलोक्यैव तद्दर्शनमात्रत एव सञ्जातमहोत्सवा स्वात्मान धन्यतमममन्यत । देव्योऽप्यमन्यन्त यत् अनेन सकलनारीसमाजस्य मस्तकमुन्नत कृतम् महोपकारश्चेति ।

रात्रौ तैमूरस्य प्रस्तावोपरि विचारविमर्शनार्थमेकत्र सर्वे एकत्रिता अभूवन् । सम्मुखे मृदुलास्तरणमये वेत्रासने यजदानी, परमसौम्यो विशालकायः तेजस्वी समासीन, तस्य दक्षिणपार्श्वे तत्पत्नी, ईरानदेशीयवेषभूषाऽलङ्कृता, नेत्रयोः दया, हृदये विश्वासः वदने च ज्योतिः सभृतेव स्थिता, वामभागे च उम्मतुल्हबीबनाम्नी तत्पुत्री या हि

सम्प्रति रमणीवेषे एव साक्षान्मोहिनीमूर्ति ब्रह्मचर्यव्रतेन भ्राजमाना तेजोमयी दीप्तिरिव शोभते स्म ।

यजदानी प्रस्तावस्य विरोध कुर्वन् अब्रवीत्—यद्यप्यहम् स्वमनसा किमपि कथयितु नेच्छामि तथापि यदि परामर्शदानस्य ममाधिकारोऽस्ति, तर्हि स्पष्टमह भणामि, यद् भवताऽस्य प्रस्तावस्य कदापि समर्थन न वा स्वीकृतिश्च देया, यतो हि वार्तैषा तैमूरान्नाधिक काल सुगुप्ता स्थास्यतीति यद् भवान् न युवा पुमान्, अपि तु कुमारी युवतीति । तदानी काऽस्माक परिस्थितिर्भवित्रीति कल्पनाऽप्यस्य भयावहा । अस्मिन् विषये च या या टीकाटिप्पण्यो भविष्यन्तीति मत्तोऽधिका भवती जानात्येव । अत्र तु अहमेव समुपस्थित आसम् अतः मत्सम्मुखे "कुत्सा" किमपि निगदितु नाऽशक्नोत् समये समयेऽह तम् प्रतिवादार्थ-मुद्युक्तमप्यरुन्धम् । किन्तु तत्र तु भवत्येवैकाकिनी स्थास्यति, अतः तव परोक्षे यथेच्छ सः त्वद्विरोध कर्तु समय लप्स्यते । अनर्गलञ्च त्वयि दोषारोपण कर्तु सुलभमवसर प्राप्स्यति ।

तत्पत्नी तु स्वेच्छामेतादृश महत्वमपि दातु नाकाक्षत । अवदच्च-श्रुत हि मया तैमूरस्य दृष्टिर्न पवित्रा सदाचारपूता च न स सदाचारी ( सच्चरित्रः ) नाह कथमपि त्वा तत्र गन्तु अनुमति दास्यामि । यदि दुर्दैवात् काचन घटना घटेत, ससारे अपयश प्रसरेत् । एवमेवास्मान् वीक्ष्य हसन्ति जनाः ।

इत्थम् बहुकाल तौ दम्पती, विविधैरुच्चनीचभावै' नानाशङ्का-कल्पनाभिः, विचारविनिमयमकुरुताम् । हबीबस्तदा मौन धृत्वैवा-तिष्ठत् । यजदानी समचिन्तयत्, यत् हबीबोऽपि सहमत एवेति । सः ( यजदानी ) सर्वथा निषेधात्मकमेव निर्णय श्रावयितु ( दातु ) उद्यत-आसीत्, सहसैव हबीबोऽपृच्छत् "भवन्त तैमूर किं कथयिष्यन्ति ?"

"एतदेव—यदत्र निर्णीतमस्ति निर्णयो वाऽस्माभिः कृतः ।"

"अहन्तु किमपि नाकथयम् ।"

मया तु ज्ञात यद् भवत्यपि, अस्मद्विचारैः सह सम्मत एव ।

नाहम् सम्मता कदापि नैव । भवान् तत्र गत्वा वदतु तम्-यदहम् स्वीकरोमीति ( हबीबो भवतः प्रस्ताव सहर्षं स्वीकरोति ) । माता हृदये हस्त धृत्वावदत्–किमेवमनर्थं कुरुषे वत्से ! ससार किं कथयिष्यति, क्षण विचिन्तयेति ।

यजदानी, अपि स्वशिरोधृत्वाऽतिष्ठत्, मन्ये हृदये वज्रपातोऽभवदिति । मुखादेकोऽपि शब्दो न निरसरत् ।

हबीबः किञ्चित्क्रोधाविष्ट सभ्रुकुटिसङ्कोच निर्भयमवदत्–मातः ! अहम् भवत्या आज्ञातो ह्यणुमात्रमपि नेतस्ततो विचलितु वाञ्छामि । सम्प्रति भवत्या ममोपरि पूर्णाधिकार. तत्र गन्तु अनुमति दातुमदातु वेति । किन्तु जगतो, जनताजनार्दनस्य वा सेवाया सुलभसुकृताऽवसरः पुनर्जीवने कदाचित् मिलेन्नवेति विचिन्तनीयमेव । एन सुलभावसर विहाय यावज्जीवन पश्चात्तापमेवानुभविष्यामीति । अहम् विश्वसिमि यदहम् स्वात्मनिर्भरतया, स्वकार्यकुशलतया, निरभिमानतया, निष्कल्मषभावनया सत्यसङ्कल्पसेवया निस्स्पृहभावेन, सद्व्यवहारेण सच्चारित्र्येण च तैमूरपातशाह सर्वथा सत्य मानव निर्मातु शक्नोमि । पुन. कदापि नैवैतादृश जनाना ईश्वरसृष्टाना रक्तपात तद्द्वारा कुत्रचन भविष्यतीति । सः वास्तविक शूरोवीरः, सोत्साहः, किन्तु नाय निर्दयः । युद्धप्रियोऽपि शूरः कदापि न निर्घृणो भवितुमर्हति । अद्यावधि यत् किमपि तेन कृतम्, तत्सर्व धर्मान्धतया, अन्धविश्वासेन, स्वात्मनि च ईश्वरीयदूतत्वभ्रान्त्या धर्मावेशेनैव विहितम् अद्य परमात्मनाऽवसरः प्रदत्तः अस्मिन्नवसरे तमह दर्शयितुमिच्छामि—यत् जनसेवैव धर्मपालनमपि । निश्छलभावेन जनताजनार्दनस्य सेवाकरणमेव धर्मोपासना, न कदापि जनतायाः लुण्ठनम धनदाराद्यपहरणम्, निरर्थकनरसंहारो वा धर्म इति ।

स्वात्मनि च नाणुमात्रमपि सन्देहो भय वा, पथभ्रष्टतायाः शङ्का वा। अहं स्वयमेव स्वात्मनाऽऽत्मान रक्षितुं समर्थाऽस्मि। अस्ति मयि सुदृढोऽक्षुण्ण आत्मविश्वासश्च यदह सत्यव्रत-धर्म-पालनेन, सद्भावनया च शत्रूणामपि वाच स्तम्भयितु शक्नोमि। न मम सम्मुखे कश्चन विपरीतमाचरिष्यतीति।

यदि सर्वात्मना विशुद्धसद्भावेन सर्वथा प्रयतमानाऽपि निष्फला स्थास्यामि, तर्हि स्वात्मान सत्ये, स्वधर्मे वा समर्प्य, नश्वर वा शरीर स्वकर्तव्यपालने सन्त्यजन्ती शाश्वतिकेन यशःशरीरेण स्थास्यामीति-किं न मे तत्रापि विजय.? यमेव धर्ममाश्रित्याद्यावधि एतावद् वयः पावन यापित न कदाचन कुत्रापि कदापि वा स्खलन, पथभ्रष्टता, धर्म-वैमुख्यम् स्वात्मप्रवञ्चन वाऽनुभूतम्। तस्यैव फलस्वरूप सम्प्रति, एतादृश सम्मान पद वा करगत भवति। यदर्थं महान्तोऽपि जनाः स्पृहालवो भवन्ति, तत्प्राप्तये च नानोपायान् रचयन्ति, किन्तु तदीय स्वप्नमेव लभन्ते, न तत्पद साक्षादिति। यानि सर्वात्मना सेवितानि सत्कर्तव्यानि सत्सहचराणि मे मित्राणि न मा कदाचन प्रतारयिष्यन्ति। तैमूरोऽपि यदि मे वास्तविकी परिस्थिति, (इयन्तु स्त्री, नाय पुमानिति) जानीयान्नाम तर्हि का मे क्षतिर्भविञी, न तस्य किञ्चिन्मात्रमपि भय मे मनसि, इय खड्गलता मे मानरक्षिणी। विवाहसम्बन्धे तु मे विचार-धारा स्फुटैव नाविदिता भवतोरपि। यदि कश्चन सुयोग्यपुरुषो मि-लिष्यति, ममात्मा च त वरिष्यति यश्च स्वाभिमान परित्यज्य सर्वात्मना ममानुकूल्य भजिष्यति चेत् विशुद्धबुद्धचेतसा सत्यप्रेम्णा च, येन च सह स्वात्मानमप्यह समुन्नतिशिखर प्राप्तु शक्ष्यामि चेद् अहमपि तस्य चरणदासीभूत्वा विष्णुं श्रीरिव त सर्वात्मना स्वात्मसमर्पणेन सप्रेम सेविष्ये।

श्रुत्वैतत् यजदानी प्रेमनिमग्नो वात्मल्यरससम्भृतहृदय. सहसोत्थाय ता हबीबनाम्नी स्वतनया कण्ठलग्ना कृत्वा तन्मस्तकोपरि हस्त पुन.

परामृशति स्म। तत्पत्नी तु न तथा शीघ्रं विश्वस्ताऽभवत्, सा स्वतनया नैकाकिनी कुत्रापि प्रेषयिष्यतीति, साऽपि तया सह यास्यतीति-निश्चिनोति स्म।

( ५ )

अनेके मासा व्यतीता', युवक-हबीबः तैमूरस्य मन्त्री आसीत् परन्तु वस्तुत. स एव पातशाहोऽपि। तैमूर. तस्यैव चक्षुपा पश्यति तस्यैव श्रवणाभ्यां शृणोति अधिक किमु, तस्यैव बुद्ध्या विचिन्तयति, हबीब यथा यथा यद्यत् किमपि कथयति, तत्तथैव सः करोति। सर्वात्मना पातशाहस्तदधीन आसीत्। स इच्छति यद् हबीब प्रतिक्षण तस्य नयनपथपान्थस्तिष्ठेत्। स च हबीबमेव स्वसुखस्य साधनममनुत। हबीबसन्निधावेव स स्वर्गसुखमन्वभूत्। न केवल तैमूर एव हबीब प्रत्येतावाननुरक्त आसीत्-अपितु सर्वोजनस्तत्रत्य तस्मिन् दृढानुरागः समभूत्। नासीत् तत्र समरकन्दे-एकोऽपि ईदृशः प्राणी यो हि हबीब प्रति द्रोहमीर्ष्यां वा समाचरेत्। हबीबस्य व्यवहारेण सर्वे तदीयाः तदधीना वा अभवन्। स सर्वानेवामोहयत्। यतो हि स. न्यायात्पथः किञ्चिन्मात्रमपि न व्यचलत्। कदाचन न्याय-नियमपारतन्त्र्येण अनेन यदि केचन दण्डिता अपि अभूवन् तेऽपि न्यायनियमशृङ्खलानिगडितामेव विवशमेन-मन्वाना नान्यथाकल्पन दुर्वृत्ति वा कदानन कल्पयन्ति स्म-अपितु त प्रति श्रद्धा विश्वासमेव हृदि धारयन्ति स्म। यतो हि न्यायः, न्यायकर्तार न कदाचनापेक्षाधिक कटु रचयति।

सन्ध्यासमयः सञ्जातः। सर्वे राज्यकर्मचारिणोऽपि स्व-स्वावास गताः। तदानी निशाकृतान्धकारमपनेतु मधूच्छिष्टवर्त्तिका प्रकाशः परित' प्रसरति स्म। अगरुवर्त्तिकाना सुगन्धमयो धूमः कोणकोणावधि सर्वं शिविर-भवन च समन्तात्सुरभि चकार, हबीबोऽप्युत्थाय गन्तुमुद्यत एवासीत् यत् सहसैवैकः प्रतिहारी समागत्य सूचयति स्म यत् पातशाहः समायातीति।

हबीबः सूचनयाऽनया नातिहृष्टमना अभूत्। अन्यमन्त्रिगणवत् नाय पातशाहस्य सम्पर्क वाञ्छति स्माधिकम्। स तु तैमूरात् यावच्छक्य दूरमेव तिष्ठन् सर्व कार्य सम्पादयति स्म। कदाप्येतादृशोऽवसरो न समायात यस्मिन् स पातशाहेन सममेकत्र भोजनमपि कुर्यात्। यदा यदा, तस्य मित्रगोष्ठ्या सहभोजोत्सवे वा कदाचन सभ्यतावशादवरुद्धोऽपि येन केनापि व्याजेन स्ववचनवैदग्ध्येन-व्यवहारकौशलेन, समयानुकूलरचनाचातुर्येण ततोऽपसृत्य स्वभवनमागत्य स्वमातु पार्श्वमभजत्। मातु समीप तिष्ठन् सकल तत्रत्य विहितमुदन्तजात क्रमश स्वा जननी श्रावयामास। सा च सर्व श्रुत्वा स्व-स्वीकृति मुद्रा, स्वचक्षुः शिरोभ्रुकुटिस्पन्दनमुद्रया तस्मिन् अङ्किता कृत्वा तत्कृत्य प्रशशस।

हबीबः द्वारोपरि समुपस्थाय तैमूरस्य स्वागतमकरोत्। तैमूरो मृदुलतूलास्तरण - समलङ्कृते मञ्चपीठे तिष्ठन् मधुरमुवाच—"अहमाश्चर्य्य करोमि, यद् भवान् अस्मिन् विभ्राजमानयौवनोत्सेधेऽपि कथ विरक्तमहर्षिवत् जीवनयापन करोति वयस्य! परमात्मना तुभ्य कन्दर्पदर्पदमन अमन्दानन्दसम्भृत सौन्दर्य्य दत्तम् यद् दृष्ट्वा परमरूपलावण्यगर्विता रमण्यो देवरमण्योऽपि त्वयि मोहिता सानुरागा बद्धभावाः निर्निमेष त्वा समुदीक्षन्ते। पतिरूपेण च त्वा लब्ध्वा स्वात्मान कृतकृत्य मन्वाना सर्वदा तवप्रणयाऽनुग्रहमेव कामयन्ते।

वयस्य! त्वम् जानासि न वेति, न ज्ञायते—यदा भवान् तस्मिन् कस्तूरिकावर्णे वाजिनि समारूढो वायुसेवनार्थं बहिर्निर्गच्छति—तदानी समरकन्दस्य गवाक्षेषु स्थिताना दिदृक्षूणा लोचनानि निर्निमेषमेव भवन्त वीक्षन्ते, भवत' सकृद्विलोकनायैव प्रतीक्षमाणाः सहस्रोनरानार्यश्च त्वदागमनवेला प्रतीक्षन्ते, किन्तु समन्तात् पश्यतस्तान् सकृदपि निरीक्षितु तदुन्मुख स्वचक्षुषी प्रेरयन्त भवन्तं कदाऽपि नाह व्यलोकयम्।

मम त्वीश्वर एव साक्षी यदह त्वयि कियान् बद्धभावोऽस्मि। सर्वदाऽह वाञ्छामि यदह त्वत्पादचिह्नेषु स्वात्मान चालयेयमिति। कामयेय

च यथा भवान् ससारे वर्तमानोऽपि सर्वप्रकारेण व्यवहरन् सर्वाननु-रञ्जयन्नपि जलेकमलपत्रवत् निर्लिप्त इव तिष्ठति तथैवाह—मपि सर्व व्यवहरन् स्थातुमिच्छामि, परन्तु नास्ति मयि तादृश हृदयम् । न मे तादृशीशक्तिः, न वा तादृशी प्रतिभा । सदैवाह स्वात्मनि समस्ते ससारे तादृशशक्त्यभावेन, परमेर्ष्यया च दन्तान् पेषयामि, सघट्टयामि च। सर्वदैव मा रक्तपिपासा विवश करोत्येव, सतत बाधमानाञ्च ता भवान् न शान्ति नेतु कामयते। न वा निर्मूला विदधाति भवान्। सर्वमिद जानन्नापि, यद् भवतोऽधिक न कोऽपि कर्तुं प्रभुः, यद् भवान् करोति—इति तथाप्यह स्वकलुषिता कोपमयी निष्करुणा वा प्रवृत्तिमात्मना वशीकर्तुं नालम्। भवास्तु येन पथा निःसरति तत्रैव प्रेम्ण प्रकाशः प्रस्फुरति। येन च भवन्त प्रति द्रोह, ईर्ष्या वैमनस्य वा करणीयमेव, किन्तु सोऽपि भवन्मैत्रीमेव कामयते, येन केन च प्रकारेण त्वन्मैत्री समासादयति च।

अहन्तु यतो यतो वा गच्छामि, ततस्तत एव घृणा, मलीमसं विद्वेष, ईर्ष्या, हिंसाप्रवृत्ति च पश्यामि। न तत्र सौमनस्यगन्धोऽप्युपलभ्यते। यमेव मे मित्रमनुमिनोमि, सोऽपि मे रिपुः सिद्ध्यति। ससारे, इदमे-वैतादृशं स्थान यत्राह पराजितः स्तब्धः किकर्तव्यविमूढ इव तिष्ठामि पश्यामि च क्वचन वैराग्यस्य प्रभाम्, ससाराद्विमुक्तेः द्युति वा। यद्यत्र-भवान् मन्यते, चेत् इदम् राज्यसिहासनम्, राज्यमुकुट वा मम सद्व-र्त्मनि कण्टकम्, विघ्नकर, प्रतिरोधक वा, तदाऽह शपथेन भणामि, ईश्वरो मे साक्षी क्षणार्द्धेनैव सर्वं त्युक्तुं समर्थः, सन्नद्धोऽस्मि। अद्याह भवतः सम्मुखे इमामेव भावना हृदिकृत्वा समागतोऽस्मि, अतो मे भवान् पथप्रदर्शको भवतु, येनाह सत्य शिव सुन्दरम्, शाश्वतिकी शान्तिमानन्द वा समासादितु शक्तः स्याम्। वाञ्छामि च भवान् सर्वदैवास्मिन् भवने मन्निकटे वा निवसतु, यतो मे सत्य-सुखस्य, आदर्शजीवनस्य वा लाभः करगतो भवेत्। सत्य ज्ञान वा लभेयेति।

श्रुत्यैव हबीबस्य हृदयगतिः तीव्राऽभवत्, स सशङ्कितो मनसि चिन्तयामास--किमद्य मम नारीत्वस्यभेदः प्रकटितोऽभूत्, क्वचनमपि कामिनीत्वरहस्योद्घाटनन्तु नानेनालक्षितमिति—सः क्षणमात्रं स्तब्ध-इवाभूत् किमुत्तरमस्मै देयमिति । हबीबस्य कोमल हृदय तैमूरस्यैतादृशी-मात्मग्लानि तदुन्मुखे तेनैव प्रकटिता विज्ञाय द्रुत द्रवितमभूत् । यस्य नामश्रवणेनैव ससारः कम्पते, स अद्य तस्य सम्मुखे इत्थ कारुण्यभिक्षा भिक्षते । तदानी तैमूरस्य तस्यामेव कठोराया, विकृताया, नीरसहिंसा त्मकप्रवृत्तिमुद्राया भयावहायामपि एक स्निग्ध मधुर ज्योतिः पश्यति स्म हबीबः । मन्ये तदन्तस्तलात् सद्योजागरिता विवेकच्छटा बहिः प्रास्फुरदिति । एतदपि तदानी विज्ञात भवेत् - यत् तैमूर स्वजीवनमपि यस्मिन् उन्नतिपथे प्रवर्तनस्य सामर्थ्यमपि न प्रतिभाति स्म-नोत्थानस्य वा स्वात्मनोऽभ्युदयार्थ काचन चेष्टैव दृष्टा, तन्निरर्थक, विशेषतश्चा-स्मिन् वितथप्रयत्नेतु सर्वथैव तुच्छममनुतेति—एतदपि सर्व हबीब-स्तन्मुखचेष्टया समालापेन च स्पष्ट ज्ञातवान् ।

तदा हबीबः गद्गदस्वरेण समवरुद्धकण्ठेन चाब्रवीत्—स्वामिन् ! अकिञ्चनजनेऽप्येतादृशि श्रीमता सकरुणाऽनुकम्पादृष्टिरित्यहोभाग्य-मेतस्य । परन्तु सर्वसाधनसुसज्जितेऽस्मिन्राजाप्रासादे क्व मादृशस्यतुच्छत-मस्य तादृशीनिवासयोग्यता । अतीव कठिनमेतत् कर्म ।

तैमूर अपृच्छत्—कथम् ?

एतदर्थम्—यत्—यत्र सर्वविधसम्पत्ते साम्राज्य भवति, तत्रैव लुण्ठाकाना तस्कराणा वा हठादपि प्रवृत्तिर्भवतीत्यनेकशो दृष्टपूर्वा । तत्रैव शत्रवोऽपि विशेषतः समुद्भूताः भवन्ति ।

भवतोऽपि शत्रवो भवितुमर्हन्ति किमु ?

भगवन् ! अहन्तु स्वयमेव स्वात्मनः शुष्क शत्रुर्भवितुमर्हामि । यतो हि "आत्मैव ह्यात्मनो बन्धुरात्मैवरिपुरात्मन" इति, मनुष्यस्य सर्वतोऽधिकः शत्रुस्तु तस्यैवाऽभिमानो गर्वश्चेति ।

तमूरस्तु सहसैवामूल्यरत्नलाभ इवेतिहृष्टमनाः समभवत्। स च स्वमनस्तुष्टेराभास प्राप्तवान्। स च तमेव हबीबस्य कथन स्वमनसि पुन' पुनः चिन्तयन्—यत् "मनुष्यस्य सर्वतोऽधिकः शत्रुस्तु तस्यैव गर्वोऽभिमानो वेति"——मनस्येवाकथयत्——यत् हबीब—न त्व सहसा मद्वशतामेष्यसि। त्वम् तु तादृशोसि पक्षी,—यो हि विहायस्येव समुत्पतितु-मिच्छति न स्वर्णपञ्जरे निबद्धुम्। तत्र तु विलुठन्नेव स्थास्यति। भवतु, ईश्वर समर्थः [ सहि कर्तुं मतुं मन्यथाकर्तुं मपि शक्त· ]।

तैमूर' सहसोत्थाय-स्वशयनागार प्रति प्रस्थितः। मन्ये हबीबा-ल्लब्ध तद्वचनरत्न सुरक्षिते स्थाने सन्निदधातुमेव काक्षते। यद्यपि वचनमिद न प्रथमवारमेव सोऽशृणोत्· किन्त्वद्यास्मिन् हबीबोक्ते वचने यज्ज्ञान, यमादेश, या वा सत्प्रेरणा स लब्धवान्, न तथा क्वचन कदाचन पुरा ह्याप्तवान्।

[ ६ ]

इस्तखर—प्रान्तात् ममायातमिदमुदन्तजातम्——यद्—विद्रोहिभि-र्विद्रोहः प्रावर्तत। हबीबः स्वमनसि शङ्कते—यदत्र तैमूरः तत्र गत्वा विद्रोहस्यनिर्मूलनार्थ विद्रोहिणा विहिंसनमारप्स्यते, प्रस्तारयिष्यति च तत्र हत्याकाण्ड प्रबलरक्तपातञ्चेति।

किन्तु हबीब तमुपद्रव शान्तिमयैरेवोपायैः सरलतयैव प्रशमयितुं काक्षते। स च तैमूर दर्शयितुमिच्छति यत्सद्भावनाया कियती शक्ति-रलौकिकी विद्यते, इति। तैमूरस्तं न तत्र प्रेषयितुं कामयते, किन्तु हबीबस्य पुनः पुन' कथनेन परमाग्रहेण च सोऽपि त तत्र प्रेषयितुं विवशोऽभूत्। हबीबस्य स्थाने स तैमूरः स्वयमेव गन्तुमुद्यत आसीत् तदानी हबीबः प्रोवाच, भगवन्! दासे मयि जीवति सति, न स्वामिन भयमुखे पातयितु स्वात्मनाऽनुमतो भविष्यामि। नैतद्भवितुमर्हति।

तैमूरः सस्मितं प्रोवाच, प्रिय वयस्य! भवज्जीवनस्य तुलनाया मज्जीवनस्य तु किमपि मूल्य नास्ति। ततोऽपि, नाद्यावधि कदापि

स्वजीवनस्य चिन्ता त्वहमकरवम्। ससारे जनाना विहिसन, द्रव्यापहरणम् —रक्तपात, सहस्रशोऽबलाना सौभाग्यसिन्दूरापहरण, मुग्धानां दुग्धमुखाना बालकानामनाथीकरण विहाय किमत्र ससारे मया स्थापितम् मम मरणानन्तर जगतः स्मरणायेति। अतो जनता मन्मरणानन्तर ममोपरि लेशतोऽप्यश्रुपात करिष्यति हि—विश्वसिहि ! मादृशा लुण्ठाकास्तु सर्वदैव भूतले समुत्पन्ना अभूवन्, भवन्ति, भविष्यन्ति, किन्तु न भवादृशाः सर्वहितैषिणो विश्वप्रियकरा, ह्यजातशत्रवश्चेति। ईश्वरो न कुर्यात् यदि तत्रगतस्य भवत' कि, भवतः शत्रूणामपि कदाचनानिष्ट भवेत्, तदानी समस्तमिद मे साम्राज्यन्तु रसातलमेव यास्यति, भस्मसाद्वा भविष्यति, ततोऽहमपि धेनुकयाऽनया—स्वहृदिमर्माऽऽघात विधाय लोकान्तरप्रस्थानातिरिक्त नान्य पन्थान क्षेनाय पश्यामि, नाहम् किमपि प्रकाशयितु शक्नोमि हबीब ! यदह भवत कि कि लब्धवानिति ममप्रियतम ! यदि दशवर्षात्पूर्वं सौभाग्याद् भवान् मिलितः स्यात्, नैतावान्, अनर्थो ममेतिहासे कुत्सितकर्मबोधनै. कलुषितकृष्णमसीमयैरक्षरैः लिखितो भवेत्। किम्बहुना—आवश्यकतानुसारमह मादृशान् शतशोमनुजान् तवोपरि अवतार्याऽवतार्य—प्रक्षेप्तुमपि सौभाग्यमेव मस्ये। एतदेव विजानीहि—यद् भवान् ममात्मान स्वात्मना सहैवानीय गच्छतीति। अद्याह सत्य ब्रवीमि हबीब ! त्वयि मे कियत् प्रेम प्रसृतमस्ति, यत् त्वामहमात्मन' प्राणेभ्योऽप्यधिक प्रिय मन्ये, नाद्यावधि कस्यामपि सौन्दर्यसौभाग्यशालिन्या ममैतादृशोऽनुरागो निहित समभूत्। कीदृश प्रेम्ण स्वरूपमित्यस्यापि ज्ञानमधुनैव लब्धम्। किन्तु, अहमपि भवता सार्ध चलेयमित्यत्र का हानि ?

हबीब कम्पितेन हृदयेनावदत्—भगवन् ! यद्यह भवतस्तत्रागमनस्यावश्यकता द्रक्ष्यामि, तदानी सूचयिष्यामि।

तैमूर. स्वकूर्चोपरि हस्त धृत्वाऽब्रवीत्—यद् रोचते भवते, किन्तु

प्रत्यह तत्रत्योदन्तजातेन सूचनीयोऽहं भवता, अन्यथा वृत्तान्तमप्राप्य व्याकुलः सन् तत्रैव समुपस्थितो भविष्यामीति ।

तैमूरः कियता प्रेम्णा, कियता सहानुभूत्या कियतासमुत्साहेन हबीबस्य प्रस्थानस्य व्यवस्था—समुपकरणसम्भारञ्च सुसज्जितं कृतवान् । अनेकविधानि सुखसाधनानि स्वरूपानुरूपाणि—आवश्यकताजोऽप्यधिकानि वैभव प्रभावोत्कर्षवर्धनानि समुपकरणानि—यानि यानि वा वस्तूनि तत्रोपलब्धुमशक्यानि तानि सर्वाणि समायोजितानि । स च एतावान् सलग्न आसीत् यथा काचन माता स्वतनया श्वशुरगृहं प्रेषयन्ती तदर्थं दानीयवस्तूनि सस्नेहं समाकलयतीव ।

यदा हि हबीबोमहत्या सेनया सह प्रस्थितोऽभूत् तदा समस्त समरकन्दः तेन सहैवासीत् । तैमूरस्तु वस्त्रेण स्वचक्षुषी पिधाय, मर्माहतपक्षीव नतमस्तकः हृदि निगूढचिन्ता-वेदनो, विकल इव, विस्मृत इव निर्गतहृदय इव, विवेकशून्य इव, शून्यमिव सर्वं जगत्—मन्वानः इव, सिंहासनोपरि—पाषाणप्रतिमेवातिष्ठत् ।

[ ७ ]

"इस्तखर अरमनी" ईशामतावलम्बिना प्रान्तमासीत् । यवनाः तान् पराजित्य तत्र स्वाधिकारं स्थापितवन्तः । नानानियमानपि तादृशान् प्रावर्तयत् यैः इशाधर्मानुयायिना पदे पदे पराधीनतायाः प्रबलतरोऽनुभवो व्यवहारनिरोधकः समभूत् । तेषां कृते "जजियानामा" करः प्रचारितः योहि सर्वैः तैः दातव्यः आसीत् । अनेन च करेण यवनास्तु मुक्ताः आसन् । अन्यश्च तेषां गिरिजागृहे घण्टाघोषो निषिद्धः कृतः । अपरश्च नियमः मदिरापान-निरोधकः प्रसारितः । यद्यत् कार्यं ईसाधर्मानुयायिना प्रथमावश्यकं करणीयमासीत्, यञ्च यवना स्वधर्म-विरुद्धं अमन्यन्त, यत्तत्सर्वं तैः प्रतिरुद्धम् येन ते ईशाधर्मिणो रुद्धव्यवहाराः खिन्नाः उद्विग्नाः समभूवन् । अतस्तैः क्रियात्मकम् तेषां नियमानां विरुद्ध-

मान्दोलन कृतम् । यदा च यवनाधिकारिणः शस्त्रबलेन तेषामान्दोलनं निरोद्धु प्रायतन्त,-तदानी तेऽपि स्वात्मरक्षणाय, सहसा क्षुब्धाः प्रत्यपकाराय सन्नद्धाः समभवन् । तैश्च यवनाना प्रान्तपतिः, बन्दीकृतः, येन तादृशीव्यवस्था शासनप्रकारश्च प्रवर्तितीकृत । दुर्गोपरि च स्वकीया ध्वजा प्रोत्तोलयन्ति स्म ।

तद्विरोधशान्तये समागताय हबीबायाद्यद्वितीयो दिवसः । किन्त्येषा समस्या कथ पारित स्यादिति विचार प्रासरत्तन्मनासि । तस्योदार हृदयमकथयत् - यत् - ईशाधर्मानुयायिना कृते एवैतेषा-प्रतिबन्धाना किमपि नास्ति प्रयोजनम् । प्रत्येक-धर्मस्य सम्मान तु समानरूपेणैव भवितव्यम्, किन्तु यवनास्त्वेषा प्रतिबन्धाना दूरीकरणे कदापि सहमता न भविष्यन्ति, यथा कथञ्चित् - यदि एते ह्यनुमता अपि भवेयुः किन्तु तैमूरस्तु सर्वथैव न मस्यते । यद्यपि तस्य धार्मिक - विचारेषु किञ्चिदौदार्यं समायात किन्तु, एतान् प्रतिबन्धान् दूरीकर्तुं कदापि न स मञ्जूरीकरिष्यति । परन्तु स. ईशाधर्मानुयायिषु दण्डं समाचरेत् किमु-यत् ते स्वधर्मं पालयन्तीति । स्वधार्मिक - स्वतन्त्रतायाः कृते विवदन्ति - कलहमुपद्रव वा कर्तुमुद्युक्ताः सन्ति । यद्धि सः सत्य मनुते, तस्य नाशमपि कथं कुर्यात् ? नहि - नहि सत्यस्य पालनन्तु तेन कर्तव्यमेव, परिणाम' कीदृशोऽपि नि सरेत् पदाधिकारिणोऽवगमिष्यन्ति, यदह सीमातीत कार्यमाचरामोति परञ्च नास्ति मे मनसि स्वल्पाऽपि विभीषिका । इति ।

अन्येद्यु हबीब. प्रभाते एव डिमडिमघोषपुरःसरमेतमादेश प्रावर्तयत् यत् "जजिया" कर. समुत्थापितो ध्वस्तञ्च । मदिरायाः घण्टाघोषस्यापि प्रतिरोधोदूरीकृतः नाधुना कीदृशोऽपि प्रतिबन्धः ।

यवनेषु विप्लव. समुत्पन्नः — सहसैव सर्वे जल्पन्ति स्म - अयम् विश्वासघाती, कृतघ्नश्च हबीब , इति । पातशाहस्तैमूरो य यवनधर्मं

स्वात्मशोणितेन ह्यसिञ्चत्, तस्यैव मूल तस्य मन्त्रिप्रवरेण हबीबेन स्वहस्ताभ्या समुच्छिद्यते, समुत्खात्यते । श्रुत्वैव सर्व विपरीतमिवाऽभूत् । समस्तमेव स्वकीय प्रधानसैन्य हबीबस्याज्ञा समुल्लङ्घ्य यवनै सह-सम्मिलितमभूत् हबीबोपर्य्येवाक्रमण कर्तुमुद्यतमभूत् । सम्प्रति-प्रधान राज्यसेनाया सहयोगेन तत्रत्याना यवनाना शक्तिः प्रावर्धत, - अति प्रबलाऽभूत् । हबीबः स्वप्राणान् रक्षितु 'इस्तखरीयदुर्ग शरणी कृतवान् । यवनाश्च प्रबलशक्तिमन्तः समन्तात् दुर्ग समाक्रान्तवन्तः । विचिन्तितञ्च तैः यदय हबीब पातशाहस्य तैमूरस्य विरुद्धमाचरितवानिति - तम् परितोऽवरुध्य दुर्गे एव त वन्दीभूत परिकलय्य - तस्य विरुद्धाचरणस्य सूचना तैमूर - समीप प्रेषयितु कमपि दूत प्रेषयामासुस्ते ।

[ ८ ]

अर्धरात्रिर्व्यतीता, तैमूरो दिनद्वयात्तत्रत्य किमप्युदन्त "इस्तख-रीय" न लब्धवान् । नानाविधाः शङ्काः प्रावर्धन्त । मनसि-पश्चात्ताप-मपि करोति स्म - यद् - किमर्थमहमेकाकिन हबीब तत्रविरुद्धवातावरणे प्रेषयम् । यद्यपि सः पूर्णोनिर्भयो नीतिकुशलोऽप्यस्ति, किन्तु यदिविरुद्धा-न्दोलन प्रतिदिनमधिकाधिका विषमामेव स्थिति धारयिष्यति - तर्हि मुष्टिमेयेन सैन्येन स कि करिष्यति ? कथञ्च स ता स्थिति सम्भालयिष्यति ' अयमुपद्रवश्च वृद्धिमेव यास्यति । तत्रत्या ईशामता-नुयायिनस्तु महान्तो भयावहाः सन्ति । यदा च ते ज्ञास्यन्ति यत् तैमूरस्य करवालस्तु कुण्ठितप्राय एव, सतु सम्प्रति राजप्रासादेषु विलासोल्लासभाक् समभूदिति तर्हि ते द्विगुणतरेणोत्साहेन विरोध कलयिष्यन्ति । हबीबोऽपि कदाचन शत्रुभिः समाक्रान्तश्चेत् तदानी महाननर्थः समापत्स्यते ।

स हि स्वहस्ताभ्यां जानुनी प्रताड्य, आसनबन्धञ्च परिवर्त्य, आत्मन्येव विवशतामय, स्वाविचारजन्यकोपक्षोभ पश्चात्तापजमकरोत् । अचिन्तयच्च स कथमेतादृग्घतोत्साहः समभूत् । किं तस्य शौर्यम्, धैर्यम्,

तेजश्च ततो निःसृतमिवाऽभूत् यस्य नामश्रवणेनैव शत्रवः प्रकम्पन्ते स्म, स एवाद्य भीरुवत् - मुग्धाकामिनीव राजभवनेषु स्वमुखं प्रच्छाद्य निश्चेष्टः स्थितो व्यर्थमेव मनोरथान् कुर्वन्नास्ते। ससारस्य सम्मुखे त्वस्यायमेवार्थो भवितुमर्हति यत् - तैमूरो नाधुना समराङ्गणसिहः स तु स्वावरोधीय विलासभूमिविहारी मृग एव, किंवा कृत्रिम शार्दूल-चर्मावृतः सिंहवेषो जम्बूकः हबीबस्तु देवदूत एव, सोऽनभिज्ञो मानवस्थदोषैः अपरिचितो वा मनुष्यभावनाभिः। योहि करुणायाः सरलतम स्वच्छ-हृदयस्य, निःस्पृहतायाः प्रतीको देवता वा, सः कथं ज्ञातुं शक्तो यत् मनुजः कियान् कूटनीतिज्ञः स्वार्थैकलक्ष्यो वा भवति, स्वार्थसाधनार्थञ्च कथं मानवोऽपि दानवायते, इति। यदा हि शान्तेः, सर्वत्रानन्दविलासानामेव साम्राज्यं भवति तदानीन्तु तादृशो भावो व्यवहारो वा हितकरः कदाचन सिध्येत् - परञ्च यदा भीषण - सङ्ग्रामः प्रावर्तत, प्राबर्धत वा तदानी-ममानुषतीयाः प्रबलः प्रकोप, तदानीमेतादृशस्य स्वभावस्य त्वावश्यकतैव नास्ति। तदानीं तु तस्यैव विजयो भवति यो हि मानवरक्तपातेन होलोत्सवमिवाकलयति। शस्यसम्भृतानि क्षेत्राण्यपि अग्निसात् करोति, वनाटवीषु च वसतिं रचयति - ससुखं निवसतो वा ग्रामान् अरण्यानिव निर्जनान् विदधाति। सुखशान्तेर्नियमाः समरनियमेभ्यो भिन्ना एव।

सहसैव प्रतिहारी समागम्य-इस्तखरतः कश्चन सन्देशहरः समायातः इति सानुनयं निवेदयामास। सन्देशहरश्च नीचैः मस्तकं अवनमय्य सप्रश्रयं सभूमिस्पर्शनं प्रणम्य, एकतः परमविनयेन उत्थितोऽभूत्। तैमूरस्य प्रभावः प्रतापश्च तस्योपरि तथा पतितो येन सः निवेदनीय-मपि विषयं स्वागमनप्रयोजनमपि विस्मृतवान्।

तैमूरः स्वभ्रुकुटिसङ्कोचनपुरःसरं तमपृच्छत्, किमुदन्तजात-मानीतवान्? दिनत्रयानन्तरमभ्यागतः, सोऽपि, एतावती रात्रिं व्यतीत्यैव?

दूतः पुनः भूतल स्पृष्ट्वा अतिविनीतभावेनावदत् - प्रभो ! मन्त्रिप्रवर महानुभावेन् 'जजिया' करः समुत्थापितः क्षान्तश्चेति ।

तैमूरो जगर्ज, किं कथयसि ? "जजियाकरः" उत्थापितः क्षान्तश्चेति

आम्, भगवन् !

केन ?

मन्त्रिप्रवर महाशयेन ।

कस्याज्ञया ?

स्वाज्ञयैव स्वामिन् !

आम्, हूँ ।

अन्यदपि स्वामिन् ! मदिरायाः विषयेपि आज्ञा प्रसारितवान् ।

हूँ ।

गिरिजागृहेष्वपि घण्टावादनस्य (नाय) आदेश प्रसारितः ।

हू ।

किंबहुना, प्रभो ! ईशानुयायिभिः सह सम्मन्त्र्य यवनोपरि आक्रमणमपि समारब्धवान् ।

तर्हि, किमहम् कुर्याम् ?

श्रीमान् अस्माक स्वामी, यदि श्रीमद्भिरस्माक सहायता न कृता; सम्प्रति, तदा एकोपि यवनस्तत्र न जीवितः स्थास्यति ।

हबीब महोदयः सम्प्रति कुत्रास्ते ?

इस्तखर दुर्गे श्रीमन् !

तत्रत्या यवनाश्च सम्प्रति किमु कुर्वंते ?

भगवन् ! अस्माभि सर्वे ईशामतानुयायिनो दुर्गे निरुद्धाः ।

तैः सह हबीबोऽपि ?

आम् श्रीमन् ! स हि सम्प्रति श्रीमतां विरोधमाचरति ।

आम् ! अतएव मम हितैषिणः इस्लामधर्मसेविनश्च तं वन्दीकृतवन्तः सम्भवतश्च मम तत्रगमनात् पूर्वमेव तान् यमलोकयात्रिणोऽपि विदध्युः ?

वर्णसङ्कर ! अपसर ममाग्रतः ! यवनाः जानन्ति हबीब. ममभृत्यः अहम् च तस्य स्वामी, शासकश्च । एतत्सर्वं मिथ्या, भ्रमश्च । अस्य-समस्तसाम्राज्यस्य स्वामी हबीब एव । तैमूरस्तु तस्याकिञ्चनकरो दास । तस्य निर्णये कदापि तैमूरो हस्तक्षेप न विधास्यति [ न विधातु समर्थः] निःशङ्कम् जजियाकर क्षन्तव्य एव । न मे अन्यधर्मावलम्बिना धर्मे हस्तक्षेप कर्तुं कश्चनाधिकार., न वा तेषा धार्मिककृत्येषु कर स्थापयितु प्रभुरपि । एतदपि नोचितम्, यदि अस्मन्मस्जिदेष्वपि ईश्वराक्रन्दन भवति, तर्हि तेषा गिरिजागृहेष्वपि कथ न घण्टावादन भवेत् । घण्टाघोषे तु न धर्मविरुद्धाचरणम्, न वास्मद्धर्मक्षतिकरो दोषश्चेति । शृणोषि किमु वर्णसङ्कर ! घण्टाघोषे नास्मद् धर्मविघात । अरे ! धर्मविघातकस्तु स एव, यो ह्यन्येषा धर्ममाच्छिनत्ति । यो हि दीनान् पीडयति, विश्वास-घातक. स्वार्थैकमात्रसाधकश्च । न स धर्मद्रोही, विधर्मी वा, यो हि मृत्तिकाकणे, प्रस्तरखण्डे च परमात्मन स्वरूप पश्यति, यश्च नदीषु, पर्वतेषु, द्रुमेषु - लतासु च भगवतोवैभव पश्यति तेहि त्वत्तोऽस्मत्तोऽप्यधिका भगवद् भक्तापसदाः, ये हि मस्जिदे एव भगवान् निरुद्ध आस्ते इति म यन्ते । त्वम् जानास्येव, अहम् धर्मविरुद्धमेव जल्पामि ? कस्मैचिदपि—धर्मविरोधीति कथनमेव, अवबोधन वा स्वात्मनो विधर्मित्व-बोधनम् । वय सर्वे एव भगवत्सृष्टाः भगवदीया एव । सम्प्रति गच्छ, ताश्चास्मद्विरुद्धान् यवनान् कथय, यदि सत्वर तदुपरिकृतमाक्रमण-मविलम्ब न स्थगित कृतञ्चेत्-तर्हि तैमूरस्तत् क्षणमेव मृत्युरिव तत्रापतिष्यति ।

सन्देशवाहकस्तत्र हतबुद्धिरिव स्थित एवाऽऽसीत् तदानीमेव बहिः

विप्लवसूचिका अनिष्टबोधिका घण्टा सहसैव वादिता, सेना च समरयात्रार्थं सुसज्जिता समभवत् ।

[ ६ ]

तैमूरोऽपि तृतीयेऽह्नि महत्या सेनयावृत तत्रागतो, हबीबोहि यत्राऽऽक्रान्तः स्वसैनिकै ।

यदाहि तृतीये दिवसे तैमूरस्तत्रागत' तदानी दुर्गम् परितो रुन्धाना यवनसेना, ततोऽपमृताऽभवत् दुर्गस्थाभि शतघ्नीभि तैमूरस्य- स्वागत कृतम् । हबीबोऽचिन्तयत् यत् तैमूर' ईशानुयायिनो दण्ड्यान् मत्वा, तेभ्य एव दण्ड दातु समायातः । ईशानुयायिनो भयभीता आसन् तेषा हस्तपादा अपि न प्रासरन्, किन्तु हबीबस्तदुत्तर दातु सन्नद्ध आसीत् । ईशानुयायिना धर्मरक्षार्थं यदि तस्य जीवनमपि- समाप्ति यायात्, न तस्य मनागपि चिन्ता । अस्मिन् विषये न कथमपि ऐक्यमत्य भवितुमर्हति । तैमूरो करवालेन तदुत्तर वाञ्छति चेत् करवालस्योत्तर करवालेनैव दास्यते । इति ।

किन्तु, किमेतत् ? पातशाहीया सेना श्वेत ध्वज दर्शयति । तैमूर. योद्धु नागतोऽपितु सन्धि कर्तुमेव । तस्य स्वागतमप्यन्यविधिना भविष्यति । ईशामतानुयायिना प्रधानान् सम्भावितान् जनान् स्वात्मना सह सकलय्य दुर्गद्वाराद्बहिरागतः । तैमूर. एकाकी अश्वमारुह्य समायाति इति दूरतः समालोक्य हबीब. स्वकीयादश्वादवरुह्य यथानियम प्रणामा- दिकं विधाय त समानीतवान् । तैमूरोऽपि स्वाश्वादवतीर्य हबीबस्य शिरश्चुम्बति स्म—अवदच्च—अह सर्वमशृण्वम् हबीब ! त्वम् परमरम- णीय कर्म कृतवान्, तदेव हि त्वया कृत यत् न त्वदन्य. कोऽप्येतादृश कर्तुं समर्थं आसीत् । नाह जजियाकर गृहीतु, नवा धार्मिके कर्मणि च तेषा स्वातन्त्र्यमपहर्तुं साधिकारोऽस्मि । न धार्मिकाधिकारान् तेषा- माच्छेत्तु प्रभुः । अद्य महासभामायोज्य सर्वेषा समक्षे समर्थयिष्ये भवता

कृत कर्म । तदाऽहमेकामेतादृशी व्यवस्था करिष्यामि या बहोः कालात् स्वमनसि स्वाधिपत्यस्थापनमकरोत्, विश्वसिमि च भवानपि ता सुव्यवस्था सुकृतस्था मत्वा मञ्जूरीकरिष्यति ।

मञ्जूरीकर्तुञ्च विवशो बाध्यो वा भवितुर्मर्हिष्यते ।

हबीबस्य मुखच्छाया मालिन्यमावहति स्म, अचिन्तयच्च स्वमनसि यन्मे नारीत्वविषयक रहस्यभेदन्त्वय नैवाऽजानात्, सा का नाम व्यवस्था, इतिनानाविधाचिन्ता तस्य मनसि समुत्थिताऽभूत् ।

तैमूरः प्रहसन्नेवाऽभाषत्, त्वम् मया सह योद्धुमुद्यत. आसीः ? हबीबः, लज्जावनत एवाकथयत्, स्वाधिकाराणा सम्मुखे पातशाह—तैमूरोऽपि न वैशिष्टचमर्हति ।

नि शङ्कम्, निःशङ्कम्, त्वयि देवदूतानामिव हृदयमस्ति तथैव शार्दूलानामुत्साहः साहसो धैर्यमप्यस्ति । किन्तु दुःखमेतदेव, यत् त्वं स्वमनसि कथमचिन्तयत्—तैमूरः त्वत्कृत निर्णयमन्यथा करिष्यतीति ( कर्तु वा प्रभुरिति ) ।

त्वमेवैक एतादृशोऽस्ति यो हि मामदर्शयत्—यत्तु साम्राज्य नैकस्य कस्यचन पुरुषस्य पैतृकीसम्पत्तिः, अपितु इद हि साम्राज्य एतादृशः पादपोऽस्ति-यस्य प्रत्येका शाखा, प्रत्येकः पल्लवः समानमेव स्वपोषण (भोजनम्) प्राप्नोति ।

उभौ दुर्गे प्राविशताम् । भगवान् मरीचिमाली अस्ताचल प्रतिप्रस्थित आसीत् । सत्वर राजसभा सुसज्जिता सुसम्भृतो वा समभवत्—तस्या तैमूरः ईशाधर्मानुयायिना सर्वानेव धार्मिकाधिकारान् स्वीचकार । समन्ताज्जयध्वनिः सहसैव प्रादुरभूत् । भगवान् अस्माक सम्राज दीर्घायुषं कुर्यादिति । तैमूरः तस्मिन्नेव प्रसङ्गेऽकथयत्—वयस्या. ! नाहमस्याशीर्वादस्य पात्रम् । यद्वस्तु बलादेव भवतो हस्तात् गृहीत, तदेव पुनः प्रत्यावर्तयामि, अतो नाहं शुभाशीर्वादस्य भाजनम् नवाशिषः कार्यमेव

करोमि। अतोऽप्यधिकतर तु इदमेवावश्यक यत् सर्वे एव भवन्तो मा धिक् कुर्वन्तु—यदहमेतावद्दिनपर्य्यन्त भवत. स्वाधिकारवञ्चितान् अस्थापयमिति ।

समन्ततो धन्यो धन्यतरो धन्यतमोऽस्माकं महाराज इति—धन्यवाद-ध्वनिः प्रासरत् ।

वयस्याः ! एभिरधिकारैः सहैव भवता राज्यमपि भवद्भ्य. प्रत्यर्पयामि, यतो हि परमात्मनः सृष्टौ, दृष्टौ वा सर्वे मानवाः समाना एव । न काचनैका जातिर्व्यक्तिर्वा कस्याञ्चनान्यस्या शासन कर्तुं साधिकारा । अद्यप्रभृति भवन्त एव सर्वे स्व-स्वसम्राजः सन्ति । विश्वसिमि च भवन्तोऽपि अस्मन्मुस्लिमबान्धवान् स्व-स्वाधिकारवञ्चितान् न विधास्यन्तीति, आशास्यते । यदि कदाचनैतादृश. समयः समायास्यति—यदन्या काचन बलवतीजातिः भवत स्वातन्त्र्य व्याहन्यात् [ अपहरेद्वा । अपहर्तुं वा यतेत, तर्हि—तैमूरोऽपि तदानी भवता सहायतार्थं सहर्ष सन्नद्ध स्थास्यतीति ।

[ १० ]

राजसभा विसर्जिताऽभूत् । सर्वे सभासद पदाधिकारिणश्च विसर्जिता स्व-स्वाऽऽवास प्रात्यगच्छन् प्रधानसभा-भवने तैमूरः हबीबश्चेति—उभावेवावशिष्टौ । हबीबस्याऽऽनन अद्यतया मन्दस्मितया द्युत्या ह्यतिशयहृदयावर्जकमासीत् या ह्यद्यावधि सर्वदैव गम्भीरमुद्रयातिरोहिता मेघाच्छन्नचन्द्रिकेव मन्द-मन्दमाभा प्रकाशयति स्म । अद्य तस्य कपोलोपरि या समाकर्षिणी-छटा [ शोणिमा ] नेत्रयोर्मादकता, अङ्गेषु च चञ्चलता प्रस्फुरति न सा कदाचन दृष्टिपथमुपगता । स अनेकवारं तैमूरेण सह परिहास विनोदञ्चाकरोत् । तस्य युवती चेतना पद अधिकारञ्च विस्मृत्य स्वसौन्दर्योन्माद प्रकटयति ।

सहसा तैमूरोऽकथयत्--हबीब ! अहमद्यावधि प्रत्येका तत्र वार्तां मन्यमान एवासम् अद्याहम् त्वाम् प्रार्थये— या व्यवस्था अह करोमि - यस्याः विषये पुराप्यमूचयम् - ता भवान् स्वीकर्तुं सन्नद्धो भवतु [ स्वीकर्तव्यैव सा व्यवस्थेति ]।

हबीबः स्वहृदयस्पन्दनपूर्वक नतमस्तकः सन्नुवाच- आज्ञापयतु देव ! प्रथम प्रतिज्ञाबद्धो भव, यद् भवान् स्वीकरिष्यत्येव ।

'अहन्तु भवतोदासः सर्वदाज्ञानुपालकः ।
शिरसा धारयिस्यामि सौभाग्याभरण यथा ॥

नहि नहि वयस्य ! भवान् मम-स्वामी, ममजीवनस्य प्रकाशः, भवतोऽनुग्रहेण या पदवी प्राप्तवान्, तस्या अनुमानमपि नाह कर्तुं शक्तः । अहन्त्वद्यावधि समस्त साम्राज्य स्वात्मन सर्वतोऽधिक प्रियतम वस्तु, स्वजीवनस्याऽमन्ये । एतदर्थ उचितमनुचित सर्वमेव कर्म कृतवान्, यन्मया सर्वात्मना नैव कर्तव्यमासीत्, तदपि कृतम् । स्वजनाना-परजनाना वा रक्तैः स्वहस्तावपावत्रावकरवम् अद्य मम, सकल कार्य सम्पन्न सुसम्पन्नमभूत् । अहमस्य साम्राज्यस्य सुदृढ मूल स्थापितवान् । अधुनाऽस्योपरि भवननिर्माणकरण भवत. कार्यम् । इयमेव मेऽभिलाषा, यदद्यप्रभृति भवानेवाऽस्य साम्राज्यस्य सञ्चालको भवतु, ममजीवने-मरणान्तेऽपि च ।

हबीब. आकाशे उड्डीयमान इवावदत्—अहो एतावान् – भार ! मम निर्बलौ स्कन्धौ त्वेतावन्त भार वोढु सर्वथा असमर्थौ न तादृशौ बलवन्तौ ।

तैमूरः साग्रह दैन्यस्वरेणाब्रवीत् - नहि मे प्रियवयस्य ! ममेय प्रार्थना तु भवता स्वीकरणीयैव ।

हबीबस्य नयनयोर्हासः अधरोपरि सङ्कोचश्चासीत् स च शनैरवोचत्-स्वीकरोमीति ।

तैमूरः प्रफुल्लितः सन् सोल्लासमवदत् - ईश्वरस्त्वा चिरजीविनं विदध्यात् ।

परन्तु यदि - भवान् 'जानीयात् यद् - हबीब - एका मुग्धा अल्पज्ञा कुमारिका बालिका एवास्ति - तर्हि किम्-?

तर्हि किम्, तदानी सा मम साम्राज्यस्यैव न केवल अपितु मम हृदयस्याऽपि सम्राज्ञी भविष्यति ।

भवतो मनसि विस्मयो न जात ?

अहम् विज्ञातरहस्यतत्वज्ञ आसन् कुतोऽवधि ।

यदा प्रथमवार क्रूरतमारुण्या दृष्ट्या मा भवती व्यलोकयत् ।

किन्तु भवता पर्य्याप्त सुगोप्यमिद रक्षितम् ?

भवत्येव मामशिक्षयत् । सम्भवतः मत्तोऽन्यो न कश्चन वेदेदम् ।

भवान् कथ परिचिनोतिस्म ?

तैमूरः प्रणयवारुणीपानमदमत्तयाऽऽरक्तयाऽनुरागसृष्ट्या दृष्ट्या विलोकयन्निवाब्रवीत् नाहमेतत्तु प्रकाशयिष्यामीति प्रियवयस्य !

अयमेव हबीब., तैमूरस्य सम्राज्ञी, हमीदेतिनाम्ना प्रसिद्धाऽभूत् । इति शम् ।



# गृहद्वारं हि योषितः

कस्मिंश्चिदेकस्मिन् ग्रामे सङ्गमलालो रत्नलालश्चेति द्वौ सुहृदावास्ताम्। द्वावेव नवयुवकौ बालवयस्यौ च। एकदा रत्नलालः स्वजीविका समुपार्जितु देशान्तर प्रस्थितः। तत्र कतिचिद्वर्षाण्युषित्वा सः स्वतन्त्र व्यवसायञ्च कृत्वा यथेष्ट द्रव्य सङ्कलितवान्। द्वादश वर्षानन्तर यदा स पुन प्रदेशात् स्वदेशमुपागतस्तदा तस्य मनसि समागत, यदह, स्वबालवयस्येन साक कुशलोदन्तपुरःसर बालकालिकीञ्च समुच्छृङ्खलामनाऽऽद्यनन्ता मधुराऽऽलापमयी वार्ता विधातु सुचिरप्रवर्द्धिता समुत्कण्ठा वा पूरयितु तत्पार्श्वमुपतिष्ठेयमिति विचिन्त्य तदीय प्राचीनमेव गृह लक्ष्यीकृत्य तद्ग्राम गतवान्।

अत्रान्तरे सङ्गमलालोऽपि तत्सुहृद - वियोग - काले-स्वकीय क्षेत्र, कूप, भूमि, गृहादिकञ्च सर्वमेव समृद्ध सुसम्पन्न समुन्नतञ्च विधाय स्वयमपि नानाभृत्यगणपरिराजितः सन् तैरेव कृषि कारयन् सुमहान् धनिकः समभवत्। सम्प्रति तद्गोष्ठे शतशो महिष्यः गावो बलीवर्दाः रथाः अश्वाः राजन्ते पृथक् पृथक् गोशालाः, वाजिशालाः, आयविभागः, कृषिविभागो, गृहनिर्माणविभागादयः विद्यन्ते स्म। क्षेत्रेषु च सर्वविधधान्याना समुत्पत्तिः प्रत्यब्द पर्य्याप्तमात्राया भवत्येव। विभाति च विविधविधपादपततिसमुल्लसितम् नानाविध व्रततिसमालिङ्गित-

तरुसमृद्धि विलसितम् नैकविध प्रसूनपुञ्ज गुच्छ सस्थित चञ्चरीक-निचयगुञ्जित सकलप्रदेश सविशेषममरगणोल्लासितनन्दनचित्ररथाद्य-नेकोद्यानशोभाशत सुविराजितमुपवनमपि ।

अशेषगृहस्थोपयोगि विविधवस्तुजातैः समासादितशातजात मनोज्ञ भवनमप्यशोभत । तस्मिन् कलक्वणितनूपुरयुगल झणझणायमान कक्ष-देशे साक्षाद् देवरमणीविशेषेव राजते स्म तस्य नवोढा नूत्नवयस्का तन्मनोहारिणी सुखद-भवनमधिसञ्चारिणी प्रासादलक्ष्मीव प्रसाद-सुमुखी सुमुखी ।

नाऽधुना सा लघुकाया दरिद्रमायामयी पर्णकुटीव दैन्यकुटी, यस्या स सङ्गमलाल नूवं निवसति स्म, यत्र च प्रत्यह स्वमित्रेण रत्नलालेन सह नि'सीमघटिकातन्त्र समालापमन्त्र सरस प्रसारयति स्म । सम्प्रति तु सुप्रतिष्ठितः सुसम्भावित सः सर्वसम्मतो महापुरुषेषु परिगणित , ग्राम-प्रधानमिति सर्वजनव्यवहारव्यवस्थापको मन्यते स्म जनै' ।

रत्नलालः स्वकीय बालमित्र समासाद्य तेन सह मधुरालापेन स्वात्मानमनुरञ्जयितु नामेव प्राचीनतमा कुटीमन्वेष्टुमितस्ततः परिबभ्राम । समन्ततो भ्रमन्नेव तत्रागतो यत्र तन्मित्रस्य प्राचीन गृह-मासीत् परञ्चाधुना तत्स्थाने सुविशालं नानाचित्रशाल रुचिरतम भवन-मासीत् । सम्मुखे चैको विस्तृतशाखाप्रशाख· शिंशपावृक्षोऽप्यासीत् परितस्त सुविस्तृत चत्वर चतुरस्र सुधाधवलित सुरम्यपीठमयमशोभत । तत्राऽऽगत्य यावद् रत्नलालस्तद्भवनद्वार सम्मुख स्थितोऽभूत्, तावदेव तद्गृहाऽभ्यन्तरतः सहसा धावन् "भूः भूः, भाऊँ भाऊँ, भो· भोः" इति उच्चैः सम्बोधन कुर्वन्निव कुक्कुरराजः सहसा भषति स्म ।

तथाभषन्तं कुक्कुरं वीक्ष्य सङ्गमलालपत्नी तत्क्षणमेव बहिर्द्वार-मुपेत्य कपाटयुगलमुद्घाट्य बहिरागत्य कुक्कुरञ्चापसार्य्य नवागन्तुकं प्रति सम्मुखीभूयाऽनभिभाषमाणा केवल चक्षुर्भ्यामिवाऽपश्यत् ।

रत्नलाल – देवि ! किमिद सङ्गमलालस्यैव भवनम् ? अस्ति किमु स' ? इति साम्रेडमपृच्छत् ।

सड्गमलाल-पत्नी—सलज्जम्-केवल शिर एवाऽऽन्दोलयन्ती चेष्टयैव त ज्ञापितवती यदिद तस्यैव भवनम् । अहमपि तस्यैव भामिनीति ।

रत्नलालः-पुनस्तामपृच्छत् - किमत्रैवास्ते न वेति सड्गमलालः ? अन्यत्र वा यत्र कुत्रापि गतः ? कदा वाऽऽगमिष्यतीति ?

सड्गमलालपत्नी—नाधुना तेऽत्र सन्ति न जाने कुत्र गताः कदा वा-गमिष्यन्तीत्यपि न मामुक्त्वा प्रस्थिताः, तर्हि कथमह निवेदयामि कदाऽऽयास्यन्ति मे स्वामिन इति ।

रत्नलालः—आसीत् कश्चनैतादृशोऽपि काल यस्मिन् सड्गमलालेन सह ममाऽऽसीद् दृढतरा मैत्री । द्वादशवर्षेभ्यः पूर्वमहमप्यत्रैवाऽऽसम् ग्राममिम विहाय द्रव्योपार्जनाय देशान्तर गतवान् । सम्प्रत्येव प्रति-निवृत्तोऽस्मि । परञ्च दुर्दैवविलसितमेतदपि यदत्र मेऽभिन्न मित्रमह-मधुना न पश्यामि । न वा समालापसौख्यमप्यनुभवामि ।

सड्गलालभार्या - श्रुत्वाऽपि सर्वं किञ्चिन्नोक्तवती, न वा तं रत्नलाल स्वपत्युरभिन्नं मित्र विज्ञायाऽपि गृहाऽभ्यन्तरमागत्य (मानीय) तत्सत्कारार्थं शीतलोदकमुष्णोदकमपि यथर्तुयोग्य ग्रहीतु ग्राहयितुंवाऽऽ-ग्रह मधुराक्षरैः सम्बोधन वा चकार ।

यद्यप्यासीत् प्रबलो ग्रीष्मकाल, मध्याह्नस्य प्रचण्डचण्डांशोः प्रखरतमतिग्मघस्रप्रसृताऽऽतपोग्रवेला । शिंशपावृक्षच्छाया तदानी पशुपक्षिणोऽपि न विमुञ्चन्तिस्म । तस्यामपि प्रबलोग्रवेलाया, नितान्तोष्ण कृशानुप्रतिपक्षिण्यो बालुका अपि सूर्यकिरणेभ्योऽपि महत्तर स्वप्रभाव जनयन्ति स्म याताऽऽयातशालिषु कर्तव्यपरायणेषु । तस्मिन्नेव काले सामान्यतया गमनमपि निषेधयन्ति जनाः किं पुनर्मित्रादिषु । तथाऽपि त रत्नलाल न सा सड्गमलालपत्नी प्रावोचत् तृषार्तं स्वल्पत मेनाऽपिजलेन न तस्य तृषा दूरीकर्तुमपि स्वकीय कर्तव्यमबुध्यत । तदा सः स्वयमेव तृषाव्याकुलः सन्नुवाच ता शीतल जलमात्रमानेतुम् । यदा सा जलमानीय समागता, तदा रत्नलालस्तामपृच्छत्—देवि !

सर्वथाऽहमपरिचितो नाऽहं द्वादशवर्षेभ्योऽर्वाचीने काले किं किं जात-मिति पृच्छामि नान्यथा सम्भावनीयमिति—किमत्रभवती भवती सड्गम लालस्यैव गृहलक्ष्मी ? किमुतान्यसम्बन्धबद्धेति ? सड्गमलालपत्नी स्व-शिरः कम्पनेनैव स्वीकृतवती यत् सा सड्गमलालस्यैव भार्येति।

रत्नलालः—"आम्" मन्ये नवीन एव विवाहो जात । नाद्यावधि सन्ततेरुद्भवः । सुष्ठु देवि ! कष्ट न चेद् दीयता तृषाकुलिताय शीतल तोयमिति ।

सड्ग० पत्नी—( अभ्यन्तर गत्वा जलमानीय प्रयच्छति ) परञ्च न तज्जल तथाविध शीतलमेव न वा स्वच्छमपि । पात्रमप्यासीदशोभन-मेव । जले च किञ्चिद् पात्रीयोगन्धोऽपि प्रतिफलित एवासीत् ।

रत्नलालः—यावज्जल मुखे नयति तावद् दुर्गन्धजुष्टमभून्मुख-विवरम् । अत. सपदि गण्डूषमिव कुर्वन् शेष वारि भूमौ निक्षिप्य तृषित-एव तत प्रस्थातुकामस्तत्पात्र तस्या हस्ते प्रदाय प्रावोचत्—यदधुना गन्तव्यमेव । महत्कष्टमनुभूयात्र समागत्यापि स्वमित्रेण सड्मलालेन सह न मे साक्षात्कार समजनि । समागमनमनवाप्यैव यामि । सः यदाऽऽगच्छेत् तदा मद्वचनादेव वाच्यो यद् रत्नलालः समागत्य चिर प्रतीक्ष्य विमनस्क—इवालब्धनिजसुहृत्समागमोऽगमदिति । तदनन्तर-मिदमपि वाच्यम्—यद् भवान् सम्पन्नः सुप्रतिष्ठितः सुखितश्च सम-भून्नवपत्नीसनाथ इति—हर्षाऽऽस्पदम् । भवनमपि सुन्दरमेव परञ्च-गृहस्यास्य द्वार न हि शोभन समीचीनम् न वा कस्यापि कृते प्रियमेव । न रोचते मह्यन्तु । नाऽनुचितमिद मन्तव्यम् । स्पष्टमेवोदित मया, यतोऽहमस्मि शिल्पकलादक्ष' । द्वाराणा शुभाशुभविषये विशेषज्ञो लब्ध-प्रशिक्षणश्चेति । न जाने सड्गमलालेन सर्वमेतदवलोकित न वा ? परन्तु कथनीयमेवैतत यन्मयोक्तम् । सर्वथैव न मे रोचतेऽस्य गृहस्य, गृहस्थ-द्वारमिति ।

अस्तु गच्छामि तावत् । नमस्कार इत्युदीरयन् गतः ।

तदानी तस्मिन् दिने स सड्गमलालोऽपि कार्यातिरेकात् किञ्चिद्-विलम्बेनैव तत्र समागतः। सर्वत्र च निशीथिनी जनितोऽन्धकारः समन्तात् स्वसाम्राज्य स्थापितवान्। दृश्यते स्म सूचीभेद्यमेव सर्वत्र तम। गृहागतः सः सड्गमलालः स्वपत्न्या सकलमामूलचूडमेव स्वसुहृदागमन-गमनादिक वृत्तान्त विज्ञातवान्-यत्-तद्बालमित्रमभिन्न-हृदय सुहृद्वर स्वत एव गृहमागत पुन प्रतिनिवृत्त विनैव सड्गमसमा-लापसौख्यवितरणेनेति ज्ञात्वा—हा हन्त, अमिलित एव स हताश प्रतिनिवृत्त इति हृदये महत्कष्टमन्वभूत्। क्षण मौनमेव धृत्वा मन्दस्वरेण पश्चात्तापजनितपदावलीप्रयोग विदधदुवाच—देवि! किं न रत्नलाल मत्सुहृद हठादेवावरुद्धवती भवती? नासीत्—तदानी ते वदने सरसा रसना-कथ नाग्रहपूर्वक तमत्र रुन्ध्या। भद्रे! न जाने कि तेन स्वमनसि चिन्तितम्? कश्चाऽऽसीत् तन्मतिविषयः? मानसी वा भावना, किमुक्त तेनात्र समायातेन? किमस्माक कृतेऽपि किमप्युक्त तेन हितमहित वा?

तत्पत्नी—नाथ! स. सर्वमस्माक भवनादिक विलोक्य, ससुखञ्च निवास, ग्रामे सम्मान - प्रतिष्ठादिकञ्चास्माक श्रुत्वाऽतीव प्रसन्नोऽभूत् अस्मन्निवासभवनमप्यालोक्य हृष्टः सन्नपि गमनसमये प्रोक्तवान् यदस्य गृहस्य (भवनस्य) बहिर्द्वार न शोभनमयशस्करं चेति—न तद् रोचते तस्मै। स चोक्तवानह शिल्पकारः। प्रतिनिवर्तमानः सः सविशेषमेवो-क्तवान् यदेतदस्यास्य भवनस्य बहिर्द्वार न रोचते मह्यमिति।

इति श्रुत्वा सड्गमलालः साश्चर्य स्वभवनस्य बहिद्वार बार-बारमुदैक्षत। परञ्च न स व्यजानात् यदत्र को दोषः? किमशोभनम्? इति भूयोभूयश्चिन्तयन्नपि न दृष्टवान् द्वारे किमपि दूषणचिह्नम्। बहुधा विचिन्तयन्नपि न निश्चेतु सः समर्थोऽभूत् यत् कथङ्कार भवनद्वारमशोभन प्रदर्शितवानिति।



# स्त्रियो वै गृहमण्डनम्

एव सवत्सरे व्यतीते सति पुन· स्वमित्रसम्मिलनचिकीर्षा बाधते स्म रत्नलालम् । चतुर्दशहायनात्मको दीर्घतमः कालो व्यतीत स्वसुहृत्स-मालापो न विहित । अधुना त्ववश्यमेव स मिलिष्यतीति चलित्वा स्वय-मेव तेन मह समालापान् विधाय हासोल्लासैर्नेष्यामि सर्वं दिनमिति विचिन्तयन्नेव प्रस्थित । शनै। शनैः मार्गं पारयित्वा सङ्गमलालस्य भवनसमीपमुपागतः सहर्षमुच्चैश्चुक्रोश—भो· भो। भगवन् ! सङ्ग-मलाल ॥ इति ॥

ततः परिचितमिव रत्नलालस्य शब्द श्रुत्वा सङ्गमलालपत्नी सत्वर भवनद्वारमुद्घाट्य बहिरागत्य रत्नलाल नमस्कृत्य न्यवेदयत्, यदधुनाऽपि न राजन्ते ते तु । किन्तु श्रीमन्तः कथमेवमपरिचिता इव तत्रैव स्थित्वा दूरत एव कथमेव तानाकारयन्ति ? नेद किमु भवन्मित्र भवनम् । कथमभ्यन्तरकक्ष नाऽलङ्कुर्वन्ति श्रीमन्तः स्वचरणपङ्कजपराग-कणैः किं न पावयिष्यन्त्यधुनाऽपि भवनभागम् ?

रत्नलाल·—सङ्गमलाल एव नास्त्यधुनाऽभ्यन्तरे तर्हि किमहमेवैकाकी तत्रस्थित्वा करिष्यामीति। दुर्दैवमेवात्र स्वमित्रसङ्गमलाल-समागम-सौख्य प्रेक्षणप्रतिस्पर्द्धि न सहते नौ सङ्गम द्रष्टुमिह दुर्विनीतदेवः ।

सङ्गमलालपत्नी—भगवन यदि न तेऽत्र सम्प्रति राजन्ते, कार्यातिरेकादेव बहिर्गतवन्तः सद्य एव परावर्तिष्यन्ते । ते न सन्तीत्यनेन किम् ? अहन्त्वस्मि, भवनमप्यस्ति, सकलसाधनानि तेषा समस्तवस्तुजातानि नु सन्त्येव । तेऽपि होरैकादिमिते याते एव काले समागमिष्यन्त्येव । तावदभ्यन्तर कक्षमाश्रित्य विश्राम्यताम् । अहमस्मि भवदीयैव सुहृद्वधू । आज्ञापयन्तु निःशङ्क, व्यवहरन्तु स्वभवनमिव, सञ्चरन्तु स्वप्रमदवनमिव सहरन्तु मार्गजनितश्रमम् विहरन्तु यथेच्छ स्वसुहृच्चित्रशालायाम् । पदं धारयन्तु भवनाऽभ्यन्तरस्थले ।

कथ तत्रैव तिष्ठन्ति, सम्प्रति प्रचण्डोमार्तण्डस्तपत्येव । समस्तं भूतलतलमपि वैश्वानरायते । वायुरपि खरोष्णः प्रवहति । एषामध्याह्नवेला, हेला विहाय विहगा अपि विटपिविटपाऽन्तरिता विराजमाना विभान्ति । इति ।

तथापि रत्नलालः साश्चर्यं सर्व विशृण्वन्नेव तत्रैव भवनद्वाराद् बहिर्भागे सस्थित आसीत् तद्वचनमाकर्ण्य द्वारस्थपादपप्रशस्त-छायामाश्रित्य तिष्ठामि—परितोराजमानाया वेदिकायामेव विश्राम कलयामि तदागमन प्रतीक्षामपीति । इति ब्रुवन्नेव तरुवरच्छायामाश्रित्य तिष्ठति ।

सङ्गमलालपत्नी-ससङ्कोच, विनम्रभावेन पुनर्निवेदितवती-भगवन् ! किमेवमस्मान् सर्वथैव स्वात्मनोभिन्नानपरिचितानेव मन्वते श्रीमन्तः । परित्यक्त सकलस्नेह - सम्बन्धबन्धा किम् वयमिति । कथमन्यथा पादपतले स्थितिर्विहिता श्रीमद्भिः । किमुवा प्रतिज्ञातवन्तः यदस्माक गृहे स्वचरणरक्षणमपि न करिष्यन्तीति ? कृपया दययन्तु, स्वमित्रगृहमप्यात्मीयमेव भवति, अतोऽन्यथाभाव विहाय पादार्पणेन पावयन्तु सौधम् ।

इत्थम् तस्यास्तद्वचन श्रुत्वा रत्नलालोऽपि तत्कथनमनुमोदते स्म ।

रत्नलाल:—भवतु, भवत्या आग्रहोऽपि सर्वथाऽपरिहार्यः, इति वदन्नेव तदुद्दिष्टपथा प्रचलन् प्रविवेश तद्भवनमिति ।

सङ्गमलालपत्नी—एकत्रासने त समुपावेश्य तत्स्वागतार्थं सद्य एव महानस श्रितवती ।

रत्नलालः—सकलोपस्करसज्जिते भवने सुशीतलप्रदेशे सुखेन सुस्थितोऽभवत् । परितो विलोक्य च यावन्ति सकलर्तुसमुपयुक्तानि सुखोपकरणानि दर्शं दर्शं नितान्त प्रहृष्टो व्यचिन्तयत् अहो मामकीनः सुहृदपि सम्प्रति सुसम्पन्नः सम्माननीयो महामानव इव प्रसिद्धः प्रतिष्ठितो नागरिक सवृतः ।

तस्मिन्नेव क्षणे सङ्गमलालभार्याऽपि तदर्थमेकस्मिन्नेव काष्ठ-निर्मितस्थाली पात्रे 'ट्रे' नाम्नि) पृथक् पृथक् पात्रत्रये, एकस्मिन् सुशीतलं सुरभित शतपत्रीजलमिश्रित (गुलाबजलमिश्रित) वारि अपरस्मिन् तक्रं-विविध सुरभितवेसवारसैन्धवसमाराधित जीरकहिङ्गुश्याममरीचि विलसित अन्यस्मिश्च नारिकेलजल, किंवा जम्बीररस सिताक्तम् समापूर्य समानीय समुपस्थापितवती । सस्मित मधुरवाग्विलासपुरःसरं न्यवेदयत् - समनुगृह्णन्तु - गृह्णन्तु शुभम।तिथेयमिति । भूयान् समयो जात' । प्रवर्द्धते च माध्याह्निकी घोरतमावेला । समुद्वेजयतीव प्रतीयते तृषापि ।

रत्नलालः—स्थित एव चिन्तयति स्म यदद्यापि नाधुनाऽभूत् तेन ममसुहृदा सह समागम । हन्त प्रतिकूलमेव प्रतीयते मे दैवम् । इति विचिन्तयन्नेव सहसा तत्पत्न्या समासादितमिदमातिथेयमालोक्य विस्मित इव अकस्मादेव सवत्सराऽभ्यन्तर एव कथमिदमेतादृश-स्वभाव-प्रकृति-परिवर्तनमभूदस्यामेव तद्भार्यायामिति चकित-चकितः सन् सम्मुखस्थं तथाविध त्रिविध पेयमुद्वीक्ष्य प्रसादसुमुखी सुमुखी च ता मन्दस्मिताननामालोक्य मुग्धभावेन च तदीया वचनविलासावलीमाकर्ण्य क्रमेण जग्राह सर्वमातिथ्यम् ।

तत स्वल्पकालानन्तरमेव पुन समागत्य सङ्गमलालपत्नी—त सविनयं न्यवेदयत्—यदधुना समायाता सम्प्रति भोजनवेला ।

"मध्य दिन सश्रयते विवस्वान्, प्रचण्डघस्र परितापयत्यलम् ।
कवोष्ण-भोज्य सकल सुसिद्ध, भवन्तु सज्जा खलु भोजनाय ।।" इति।।

रत्नलाल—सम्प्रति सङ्गमलालस्याऽपि प्रतीक्षा करणीयैव । नाधुनाऽतिकालो जात , का त्वरा, अधुनैव पेयादिकमास्वादितमेव ।

सङ्गमलालपत्नी—भवता वयस्यास्तु स्वा क्षुधमपि न गणयन्ति । न जाने कदाऽऽयास्यन्ति, नाधुना निश्चित समय । न हि तेऽपि स्ववचनमपि परिपालयन्ति, अष्टवादनसमये समागमनप्रतिज्ञा विदधतोऽपि सर्वं दिन विहाय रात्रौ दशवादनानन्तरमायान्तीति न तेषा कश्चन विश्वास । अत श्रीमन्तस्तु सम्प्रति कवोष्णमेव सद्य पाचित सुस्वादुसरस सुभोज्य गृह्णन्तु ते तु यदाऽऽगमिष्यन्ति तदा तेषा कृते पृथगेव निर्मास्यते सकलानवीनैवोष्णतमा भोज्यसामग्री । इत्युक्त्वा समुचितपीठे आसनमास्तीर्य तत्सम्मुखे पट्टोपरि भोजनस्थाली सुसज्जीकृत्य स्थापितवती ।

रत्नलाल—सर्वां तथाविधा तत्कृता व्यवस्थामालोक्य सविस्मय—न जाने का का कल्पना स्वमनसि कुर्वन् क्षुधापि प्रतिबोधित विनैव किमपि निषेधवचन सद्यो भोजनार्थ सन्नद्धोऽभूत् ।

सङ्गमलालभार्या—हस्ते तालवृन्तमादाय शनै शनै वीजयन्ती, मक्षिकाऽपसारण कलयन्ती, मधुर समालपन्ती च नानापदार्थै त प्रीणयन्ती प्रेम्णा त भोजयति स्म ।

रत्नलालोऽपि सप्रेम परिवेषितानि नानावस्तूनि प्रेम्णैव सम्भुज्य परम प्रीत· अपूर्वमानन्दमनुभवश्च, भोजनोत्तर मृदुलतूलास्तरणे पर्य्यङ्के सुख स्वपिति स्म । तथापि तन्मित्र सङ्गमलालो नैवाऽऽगत· ।

किञ्चित् काल विश्रम्य समुत्थित स रत्नलालो गन्तव्यमेवाधुना, सङ्गमलालोऽपि नायातो यातञ्च सर्वमेव दिनम् । कि कुर्वे, मित्रेण सह समागमसुखमपि न लिखित किमु भालपट्टे । पूर्वमपि न मिलितोऽधुनाऽपि तथैव प्रतियाम्येव । इति वदन् गन्तुमुद्युक्तोऽभूत् ।

सङ्गमलालपत्नी—जिगमिषुं तं निषेधन्ती सादरमुवाच—भवद्भिरद्य तु स्थातव्यमेव सायकालपर्य्यन्तन्तु समायास्यन्त्येव। अस्मिन्नेवावसरेऽपि अमिलिता एव यदि परावर्तिष्यन्ते भवन्तस्तर्हि तु ते नितान्त खिन्ना रुष्टाश्चममोपर्य्यवश्य भविष्यन्ति भवत्सुहृद। अतोऽद्य तु स्थित्वा विश्राम कलयन्तु पुन श्वो गन्तव्यम् यद्यावश्यकम्।

रत्नलाल—मैव भद्रे, न मामवरुन्ध्या मा चैव विशेषमाग्रह रचये। गमन नितान्तमेवाऽऽवश्यकम्। नाहमेकाकी मया सह सन्ति भूयासोऽन्येऽपि यात्रिण.। सर्वेऽद्यैव प्रस्थास्यन्ति। मामेव प्रतिपालयन्तस्तत्र मार्गोपरि प्रतीक्षमाणास्तिष्ठन्त्येवेति नाऽधुना स्थेयमधिकम्। यद्यप्यहमपि, असफल एव प्रतिष्ठामि, नाह कामये—तथाप्याचरामि-गमनमेवेति विवश मा क्षमस्व। दृष्टं समन्ततः सकल, भवतमुद्यानम् भावत्क वैभवमपि। पुनरपि कथयामि सर्वविधवास्तुकलाकोविदः शिल्पकर्मदक्ष सर्वं विविच्यैव मयाऽवलोकितम्—अतः कथयामि सर्वं भवनमतीवरम्यं शिवद मङ्गलमयञ्चेति एतस्य द्वारमप्यतीवशोभन सम्भावितकुलजनोपभोग्य परमरमणीय रमणीजनमण्डितमित्येव निवेदनीयम्। पुनरेवाहमागमिष्यामीति। नमस्कृत्य गतवान् सः।

यदा सङ्गमलाल स्वभवनमागतः, तदा सर्वं रत्नलालस्य पुनरागमनगमनादिकमुदन्तमाकर्ण्यातीव हृष्टः स्वपत्नी—रत्नलालसम्बन्धे भूरि-भूरि प्रशंसा वचनान्युवाच।

विशेषत प्रोक्तवाश्च गतवर्षेतु समागत्य द्वार निषिद्धं घोषितवान् किन्त्वधुना परमरम्यं विशिष्टमिति प्रोवाच।

इति तदानीन्तनी शङ्काऽधुना निवृत्ताऽभवत्। यत्—तदा तस्य-भवत्या कोऽपि सत्कारो न विहित। अत गृहलक्ष्म्य एव भवन्ति गेहस्थाः सद्गृहस्थरमण्य। ता एव भवनस्य शोभाधायका द्वारभूता भवन्ति। अत एव तथोक्तम्। अधुना तु लब्धसम्मान प्रहृष्टस्तथोक्तवानित्येव रहस्यम्। सत्यमेव—"स्त्रियो वै गृहमण्डनम्"।

—०:०—

# नैव मान दरिद्रस्य

अथैकदा कस्मिश्चिद् ग्रामे बहुप्रज-सुनियति-नामानौ द्वौ भ्रातरौ न्यवास्ताम् । उभयोरेव विवाहादिकः सकलकार्यकलापः सम्पन्नोऽभूत् । एकदा च तौ सम्यक् विचार्य परस्पर निर्णय कृत्वा स्वीया पैतृकी सर्वा सम्पद विभज्य पृथक्-पृथक् स्व-स्वलोकव्यवहार सञ्चालयतः स्म ।

तयो बहुप्रजनामा ज्येष्ठो भ्राता आसीत् सः वस्तुत एव यथार्थ-नामाऽभूत्, तस्य भार्यायाः कुक्षितः प्रतिवर्षमेव सन्ततिरजायत । सः सन्ततेः प्रतिवर्ष समुत्पत्या तस्य पालनपोषण - चिन्तयैव सकलं समय गृहे तिष्ठन्तेव यापयति स्म ।

अन्य. कनिष्ठो भ्राता सुवियतिश्च पैतृकी सम्पति लब्ध्वा तयैव विस्तारित विविधव्यापारः स्वीय सद्भाग्यधेयाऽवलम्बितकर-युगलो दैनन्दिनी सर्वतोमुखी समन्तात् प्रवर्षन्तीमिव सम्पत्ति स्वकोषे निदधानो धनिकवर्गेष्वपिलब्धमानः सम्भावितोऽभिजनेषु वर्धितव्यवहारः स्वयमपि सम्भावित-नागरिकोऽभूत् । गेहे च तत्र प्रतिदिनमेव महाजनाना, ज्येष्ठ-श्रेष्ठ-नागरिकाणाञ्च परस्पर याताऽऽयातम्, मित्र-गोष्ठी, भोजनालपाहारादि विविध-विनोद-हासोल्लासादयः प्रावर्तन्त । समभूच्चाहरतो नवनवोत्सवादि मङ्गलविधानम् इति ।

महुप्रजश्च अहर्निश भोजनाच्छादन - व्यवस्थायामेव सलग्नो यत्र क्वचन गत्वा द्रव्यमुपार्जितु सावकाश एव नाभूत् - तेन च तस्य सकला दायभागे लब्धाऽपि पैतृकी सम्पत्तिर्न जाने कुत्र गतेति स न व्यजानात् । स च अत्यन्तन्नमेव दैन्यमन्वभूत् । तस्य भार्याऽपि केवलैक-शाटीमात्रावशेषितवसना बहुप्रजावती समये-समये स्वबालाना कृते भोजनादीना समुचितामपि व्यवस्था कर्तुमसमर्थाऽभवत् । बालका अपि सर्वे विमुक्तकेशाः अवधूतवेषा इव दिगम्बरत्वमापन्ना क्षुत्क्षामाः कृच्छ्र सान्तपन तपश्चरन्त एव त्वगस्थिमात्राः भासन्ते स्म । सोऽपि बहुप्रज. स्वसन्ततिसमावृतः सपत्नीक', द्वि-द्वि दिनेऽशितान्नकरण' केवल जीर्ण-कपटः सतत स्वसन्तानस्य लालन-पालनचिन्तया, यतः कुतोऽपि धान्यकणानादातु समन्तात् परिभ्रमन् चिन्तयामास-कुतः स्वोदरपोषणार्थं संततिसरक्षणार्थ भार्याया-भरणार्थञ्च समुचितमावश्यकीय द्रव्य लभेय, येन मे साम्प्रतिकी सकटावस्था दूरङ्गताऽभूत् । इत्थ सन्तत क्षुधापीडित. भोजनादि - सामग्रीसकलानाकाक्षी बम्भ्रम्यमाणो यदा नालभत किमपि बालाना भरणपोषणाय तदा मानावमान दूरीकृत्य स्वकीय मानवत्वादि सहजगुणगणानपि विस्मृत्य स्वोच्चनीचत्वादि विवेकशून्यो निर्द्वन्द्वो निरहङ्कारो योगीव निश्चितैकलक्ष्यो यतः कुतोपि, धान्यकणाऽऽकलनाकाक्षी सर्वतो निराशश्च-स्वाऽनुजशरणीकरणमेव श्रेयस्कर मन्वानोऽनिच्छन्नपि बुभुक्षितान् विलपतो बालकान् द्रष्टु मसमर्थो निज कनिष्ठ भ्रातुर्गृह प्रति किमप्यानेतुकाम प्रस्थितोभूत् बहुप्रज ।

तत्र गत्वा च विलोकयति स्म । यत् सर्वे भृत्यादय इतस्तत स्व-स्वकार्ये व्यस्ता. श्व. करिष्यमाण गोष्ठी समाराधनाय साधन-समा-सादन-सलग्ना आसन् । न कश्चन स्वस्थ सावकाशो वाऽऽसीत् । यः समागतस्य तस्य किमपि शृणुयात् । स विक्षिप्त इव मूक इव इतस्ततः गच्छन्तमागच्छन्त प्रतिवीक्षमाण किञ्चिद् विवक्षुः पश्यन्नेवाव-तिष्ठत् । न कोऽप्येन वदति-न वा तदागमनकारण च पृच्छति । दुर्द-शापन्न. क्षुत्पीडितो मलिनवासाः एकत्र स्थितः स्वाऽऽनुजागमन

प्रतिक्षमाण आसीत्। बहुकाल च प्रतीक्षयैव यापयामास, केचित्वेन जानन्तोऽपि दु स्थितिगतमजानन्त इव सम्भाषणयोग्यमपि नामन्यन्त। सः सम्प्रति दुर्दशामात्मनो विज्ञाय परमलज्जया स्वत्मान मृतमिव गणयन्-चिन्ताज्वालामालाऽऽकुलः खेदोद्रेकाश्रुसमाकुलित - नयनः सहसाऽनेक जनानुगम्यमान स्व भ्रातरपश्यत्।

सोऽपि भव्यवसनः परिजन - परिसेविनो दूरत एव विलोक्य निजं ज्येष्ठभ्रातर मलिनवासस-सर्वेषा समक्षे किमपि वक्तु सक्षुब्धचेताः प्रणम्यैवाग्रे गच्छत् कार्यव्यापृतान् स्वभृत्यानादेष्टु श्वस्तनकरणीया व्यवस्थामादिष्टवान्। यद्भवन्तः समागताना प्राघुणिकाना पदाधिकारिणा सुहृदा वा स्वागतार्थं सज्जा भवन्तु। एते पुनर्भोजनादिसविधानव्यवस्था कलयन्तु, अमुकोऽमुकश्च परिवेषणादि कर्मणि सलग्ना भवन्त्विति।

बहुप्रजः—तमेवानुगच्छन् तदाग्रजो बहुप्रज स्वकनिष्ठ भ्रातरं सम्बोध्य शनै शनैः स्वाभिप्राय निवेदयामास।

सुनियाति —ज्येष्ठभ्रातुर्दीनदशा विलोकयन्नपि तदीयदुर्भाग्यवशात् स्वकीय बिलासोल्लाससंलग्नमानसो न स्वीचकार तदीयाऽभ्यर्थनाम्। उक्तवाश्च - भगवन्! भवता यत् सहायतार्थमुक्त - परन्त्वहं दिनत्रयात्स्वकार्ये सलग्नः किमपि कर्तुमसमर्थः क्षमा याचे।

बहुप्रज —प्रिय, अनुज! अहमपि-सर्वे ते भ्रातृजाः त्वदीयाभ्रातृजाया च दिनत्रयादेव - अन्नकणाभावात् सोपवासं निरन्नव्रतमाचरामः। वसनाना दशा तु प्रत्यक्ष दृष्टैव भवता यथा मच्छरीरे लसन्ति तथैव तेषामपि वसनानि। क्षुधार्त्ताः सर्वे विलपन्ति च अतोऽहं विपद्ग्रस्तोऽपि नाद्यावधि त्वत्समीपमागत्य स्वकीयदुःखेन दुःखितमकुर्वम् भवन्तमिति। किन्त्वधुना क्षुधार्तांना पृथुकाना आर्तनादं श्राव श्रावं यदानासाग्रपर्य्यन्तमवरुद्धः कण्ठगतप्राणमभव तदाह त्वत्सान्निध्यमुपागतः। यतोहि त्वं ममानुज इति।

सुनियति :–क्षण विचिन्त्य–कथयति स्म-यद्यह जाने तावकीना दशा विलोकयेऽपि च परन्तु श्वः, जन्म दिवसमहोत्सवः सम्पाद्यते, तस्मिन्ना-मन्त्रिताश्च प्रायः सर्वं एव विशिष्टा शिष्टा नागरिका स्वसुहृदश्चेति, सर्वे समेष्यन्त्यत्र अतस्तेषा सत्कारार्थं नाना व्यञ्जनानि निर्माय्यन्ते। अस्मिन् कार्ये च परः शताना मुद्राणा व्ययो भविष्यति। अतोऽद्य नैका-मपि मुद्रा त्वदर्थं दातु वाञ्छामि।

भगवन्! श्वः सर्वे समायास्यन्ति, अतो भवानप्यत्रैवागच्छतु। बालान् मे भ्रातृजायामपि सहैवानयतु।

बहुप्रज –अनुज! दरिद्रः क्षुधार्त्तो मलिनवासा दुर्दैवहतोऽह क्व, क्व च भवान् सम्पन्नो विलासोल्लासरसिकः समाहूत सकल शिष्ट-नागरिकः। नाना व्यञ्जनोपभोक्ता - क्व च मादृशो दीनो दिनत्रयाद दृष्टान्नकण क्रन्दत्पृथुकपरिकरः साम्प्रत तु साक्षादन्नं ब्रह्मेत्यनुभवन् तदन्वेषणकातरः क्वेति। कथमुभयोः सह सम्भवः सङ्गमो वा। ओत नेच्छामि समायातुम्। अरे! क्षुधार्ताना दीनाना, कः सम्बन्धो धनिकाना गोष्ठ्यादिभिः।

सुनियतिः–मैव चिन्तयत्वार्यः। किं नाह भवदनुजः? किं नाऽऽवयो-रेक मातुरुदरात्समुद्भवः? किं न त्व मे ज्येष्ठः! भवत एवायमपि महोत्सवः। अतोऽवश्यमेवागन्तव्यमिति। गृहाणैका मुद्रामद्य तु कथञ्चन स्वकार्यं साधय। गच्छ श्वोऽवश्यमेवागन्तव्यम् सर्वैः। इति।

मार्गे स्वस्य दीनता, स्वानुजस्य च वैभव विचिन्त्य खेदसकुलित-मानसः शनैः शनैः स्वगृह प्रति प्रतस्थे। आगत्य च गृह स्वपत्नी सर्व-मुदन्त स्वानुजोक्तञ्च श्रावयामास। प्रोक्तवाञ्च त्वद्देवरस्त्वामाहूतवान् मा सपरिकरञ्च। यतो हि श्वः तस्य जन्मदिवसः अस्ति अतः सः सर्वानेव नागरिकतल्लजान् स्वसुहृदश्च निमन्त्रयामास। तेषा स्वागतार्थञ्च नानाविध भक्ष्य-भोज्य-मिष्टान्नानि-चोष्य, लेह्य, पेयादीनि

निर्माययति - बहवः पाककर्मविशारदाः पदार्थजातं निर्मान्ति। गृहमपि नाना कलशवन्दन — माल-पताकादिभिः मण्डितायते मण्डितम् विविधप्रकारैः। अतस्तत्र वयमपि भोजनार्थमामन्त्रिताः स्म विशेषतस्तु भवती। अहो बालका अपि श्वः मिष्टान्नं लप्स्यन्ते।

पत्नी—अहो महल्लज्जास्पदमेतत्। यद्वयं क्षुत्क्षामा द्वि-त्रि दिनानन्तर यदा कदाचन पूर्णोदरमित भोजन लभामहे-बालकाश्च क्षुधार्त्ताः सर्व दिन भोजनोपयोग्यान्नाद्यभावे रुदन्तस्तिष्ठन्ति, न तेषां कृतेऽस्मत्सविधे काऽपि व्यवस्था, वय तु अन्नादीनां प्राप्तये सतत त्रस्ताः परितो भ्रमाम· न लभामहे च कुतोऽपि मुष्टिमेयमपि साधन भवतोऽनुजश्च मिष्टान्नान्युपभुक्ते-भोजयति च स्वमित्रादीनि। अद्यावधि च न स्मरति कदाचनाऽस्मान् पृथुकान् वा, मुग्धानेतान् क्षुत्क्षामान्। किम्बहुना भवता याचितोऽपि भवदनुजो दृष्ट्वापि भवत एतादृशी दशा, श्रुत्वाऽपि चाऽस्मदीय बालकाना क्षुधाव्याकुलचेतसा परिस्थितिं वसनाऽशन त्रास सन्तप्त कलेवरायाः मयाऽपि दुर्दशा न मुह्यति मनागपि। न द्रुतमभूत्तस्याऽश्ममय चेत·। वय समयेऽप्यन्नार्थं यतमाना अपि धान्यकणविमुखाः सीदामः स चाऽस्मान् एतादृग्दशापन्नान् परमखिन्नान् विलोक्यापि-अस्मत्सहायतार्थं किमपि न वितरति स्व जन्ममहोत्सवसमाराधनाय च परःशतमप्यधिकान् रूप्यकान् व्ययीकरोति। इष्ट मित्राणि नानामिष्टान्नानि भोजयति च। कुर्वन्नेतादृश कर्माऽपि न लज्जते। न चास्मानधुनाऽपि समाकारितवान् यदि भवान् तत्र न गतश्चेत्। यद्धि भवान् स्वयमेव तद्गृहं गत· बुभुक्षितञ्च-सर्वं स्वाभिमान ज्येष्ठत्व च जन्मनाऽपि दूरीकृत्य याचक इव पुनः पुनस्तमनुनयन् तत्रैव भोजनाशया स्थितोऽभूत् तदा तेनापि स्वमुखेनोदीरितम् यद् भवताऽपि सपुत्रकलत्रेणाऽऽगन्तव्यमिति। न तत्र तन्मनसि स्नेहः सौहार्दं सहानुभूतिर्वा भवतो मानञ्च। किमेतादृशे स्वानुजव्यवहारेऽपि अस्माभिस्तत्र गन्तव्यमित्युचितम्। गत्वापि च न वय तत्र सम्मान लप्स्यामहे केनापि तत्परिजनेनापि भृत्यादिना वेति मे दृढा मतिः।

बहुप्रजः—त्वन्तु सर्वदैवैतादृशान् दुर्विचारानुद्गिरति। नाऽयं तादृशो मेऽनुजः! यतो हि स्वयमेव तेनाभिहित—यद् "आवामेकस्या एव जनन्या उदरे लुठन्तौ—ततो जन्म लेभाते। न भिन्नौ भविष्यावः। अयमुत्सवोऽपि न मद्गृहे-भवद्गृह एव मनुतामिति।"

अतो गन्तव्यमस्माभिस्तत्र। बालका अपि मोदकादीन् प्राप्स्यन्ति।

पत्नी—यथा रोचते भवते तथैव क्रियताम् नाहमपि भवदाज्ञामुल्लघयितु वाञ्छामि। भवान् मे पतिदेवो देवाधिदेव इव सर्वदा पूज्यो वन्दनीयश्च। परन्तु स्वसम्मुखे पर—कृतावमान श्रीमता कृते नाहं द्रष्टुमपि काङ्क्षे। मन्ये साम्प्रत धनहीना वय ससारश्च धनवतामेवानुनय कुरुते। निर्धन भ्रातर पितर वाऽपि जनाः परित्यजन्ति। अत एव मया निवेदितम्—सम्प्रति वय दीना धनहीना स्मः। नास्माक सविधे तादृशी वेशभूषैव—यया तद्गोष्ठी—गरिष्ठेषु वयमपि भाग मान वा लभामहे। प्रायो निर्धना हि सर्वैरप्यवधीरिता भवन्तीति विलोक्यते। अग्रे भवन्त एव प्रमाणम्।

बहुप्रजः—अस्तु यद् भविष्यति—तद्द्रक्ष्यामि। गन्तव्यमस्माभिस्तु-इत्युक्त्वा ता रजनीमशेषा विहाय—परेद्युः बहुप्रजः तत्पत्नी, सर्वाः बालकाश्च प्रतस्थिरे। तेषु केचित् दिगम्बराः केचिच्च घृतैककटिवसना परे केवलमेकजीर्ण-पटेनाऽऽवृतवक्षस्तटाः अन्ये ह्यनावृतशिरसः, अनाऽऽकलितोपानत्काः पृथुका आसन्। केचित्तदग्रे धावमाना केचित्पृष्ठतोऽनुयायिनः परे पार्श्वभागाश्रिताः अन्येऽवलम्बिताङ्गुलयः कियन्तो बहुप्रजस्य पृष्ठाऽऽरूढाः, अपरे च तत्स्कन्धे कलिताऽऽसनाः कतिपयाः स्व-जनन्याः क्रोडस्थिताः सुनियतिगृहं प्रति भोजनार्थं मोदकाशयामोदमानाः प्रचलन्ति स्म।

सप्रजो बहुप्रजः सुनियते गृहं गत्वा, तत्र बहुजनसंकुले समागतानां प्राघुणिकानां सत्काराय ससक्त-सकल-परिजने समन्तात्सुसज्जिते भवने

प्रविष्टा· एकतः स्थिता अभूवन् । बहुप्रज., तत्पत्नी, चापि इतस्ततो याताऽऽयातपरिनिष्ठितान् जनान् विलोकयन्तौ स्थितावेव सर्व दिन व्यतीयतुः । बहुप्रजस्य बालका अपि मोदकाशया क्षुधापीडिता विलपन्त एव इतस्ततो वीक्षमाणाः समागतान् ससत्कार भुक्त्वा पुनर्गतान्, नवागताश्च भुञ्जानान् पश्यन्तो विस्फारितचक्षुष एवासन् । न कोऽपि तेभ्यो बुभुक्षितेभ्यो मोदकखण्डमपि दातु कृतमतिरभूत् । स्वबालकान् तादृग्दशापन्नान्, मिष्टान्नाय, लालायितान् अनुपलब्धान्नान्, क्षुधितान् विलोक्य, स्वात्मान प्रति चाऽवहेलनापरान् जनान्, सकलपरिजनान् वाऽनुवीक्ष्य, अलब्धमानस्वपतिञ्च यथागतं तथैवैकत्र स्थितं दीन हीनञ्च विलोक्यस्वाभिमानिनी बहुप्रजभामिनी सविनय स्वपति निवेदयामास—

पत्नी — प्राणनाथ ! सर्व निरन्नव्रतादिकष्टं सोढु समर्थाऽपि स्व-देवरकृतामवहेलना परस्पर कुशलक्षेमाऽऽलापादपि बहिर्मुखमात्मानञ्च विलोक्य नाहमत्र क्षणमपि स्थातु वाञ्छामि । आत्मीयजनै परिजनै-रपि कृतावमानाऽपेक्षया तु मरणमपि श्रेयस्कर मन्ये ।

यत्राऽऽगताना न कथा तु दूरमास्ताम् किन्तु मुग्धा अप्येते पृथुकाः अविज्ञानभेदा, अनुद्भूत-स्व-पर-बुद्धयो मोदकान् प्रति सस्पृह-मीक्षमाणा अपि न केनाऽपि भोजनार्थमपि पृष्टा·—तत्रैव स्थिति विधाने को वाऽऽग्रह ? अतोऽस्मात् स्थलात् सद्यो निर्गमनमेव श्रेयः। बहु-प्रजोऽपि नीति रीतिगर्भिता स्वपत्न्या उक्ति श्रेयस्करी चिन्तयन् सप्रजो बहिर्निगत्य यथागतस्तथैव स्वगृह प्रति पुनरागत ।

इत्थ यदा हताश सन् स्वभामया समुद्बोधितोऽनुजगृहात् प्रति निवर्तितो मार्गे गच्छन् सर्वं दिन मोदकप्रास्याशाशतलालायितसकल-पृथुकपटलसयुत क्षुधितस्तृषितः स्वदुर्दैवाऽकरुणकुटिलकटाक्षशरशतसम्भि-न्नमर्माविचिन्तयन्नात्मदुःस्थितिं सपदि निशीथिनीघनान्धकारभ्रान्तमतिः प्रावृषिपयोदमालासमाच्छादितनभसि बहुलान्धकाराऽऽलोकनपराङ्मुखा-क्षियुगलो दिग्भ्रमाद्विस्मृतगन्तव्याऽध्वा—विद्युत्प्रभाप्रभासितमार्गः सहसा

प्राचीनपथमुपगत पुरातनजीर्णशीर्णार्द्धपतितप्राकारं नष्टभित्तिकं कञ्चन-प्राचीनभवन सम्मुखमुपागतमालोक्य भ्रष्टमार्गो न स्मरति निजगृह-पन्थानम्। तदुपरि च घनघोरघटान्धकारविलुप्तदृक्पथो मूसलधारा-वाहिनी सपदि समारब्धा दुर्वृष्टिमालक्ष्य लघु-लघुतरपृथुकसप्तक-समलङ्कृतस्कन्धक्रोडाद्यङ्गलतिकः सपत्नीकस्तदेवजीर्णशीर्णभवन शरणी-चकार। एकस्मिन्नशीर्णप्रकोष्ठे स्थितः वृष्टेरवरोध प्रतीक्षमाण. एव आसीत्तदानीमेव सम्मुखस्थस्य कस्यचन प्रासादस्यप्रकोष्ठस्य सहसा पतनशब्द. 'धडाम" इति समभवत्। अतुलशिलाप्रस्तरेष्टकाभार. सहसान्यपतत्। भयभीता बालकाः पत्नी च चिन्तामग्ना भगवन्त स्मरन्ती दुर्दैवोपपादिता दुरन्ता चिन्ता कुर्वन्ती स्थिताऽऽसीन्माना। सहसा विद्युत्पातेनातिदूरमभूत् विद्युत्पातशब्देन समीपस्थोऽपि प्रकोष्ठभाग "सर्रफट्" शब्देन सहैव पपात। पतनसमकालमेव विद्युत्प्रकाशे जाज्वल्यमानो रत्नराशिः सुवर्णशकलानि चागणितानि दृग्गोचरीभूतान्यभूवन्। तदानीमेव मेघादिव समायातः शब्द आकाश-वाणीव श्रुतिपथमुपगतो यत् दरिद्रद्विजदेव त्वदर्थमेव निपातितमिद सकल सुवर्णरत्नपटल गृहीत्वा सानन्द स्वगृह गत्वा मुग्धानिमान् पृथुकान् प्रीणय सतीमिमा स्वाभिमानिनी भामिनीञ्च सन्तोषयेति। श्रुत्वैतत् स बहुप्रज सर्वधनरत्ननिचय समादाय गृहमागत्य च ससम्मान ससुख सम्पन्न. सन् सर्वात्मना तुष्टो न्यवात्सीत्।



# यावदनुद्योगस्तावद्दुर्भाग्यम्

यदा हि सर्वतो नैराश्यमनुभूय कश्चिन् महालस' सभार्यः सप्रजश्च स्वीयाऽनुद्योगचक्रनिपतितो महालयात् प्रत्यावर्तते स्म, तदा मार्गे प्रचलता तेषा [स्त्री-पुत्राद्यै' सह तस्यैव महालसस्य] सर्वतोऽग्रे सः महालस ततस्तस्यात्मजास्तदनु तस्य भार्या चेति क्रमेण प्रचलता समेषा-मेषा पृष्ठतोऽनुगच्छन् कश्चिद् भीमाकारो विकृतरूपो ह्रस्वाङ्गो रूक्षकेशी निम्ननासिकोऽङ्गारसदृक्षवर्णः प्रज्वलिताङ्गारपिङ्गले नयने च बिभ्रत् क्षुत्क्षामोऽतिकृशकर्कशगात्रः पुरुषोऽदृश्यत । दृष्टवा च त महालसपत्नी भृश भीताऽभूत् ।

महालसपत्नी—स्वपति प्रति—नाथ ! कोऽयमस्माननुसरति-भयानका-कारो विकृतवेशः। यदा हि वय सर्वैरेव स्व-परजनै. परित्यक्तास्तर्हि किमर्थ-मयमस्माननुगच्छति । कोऽयमिति ।

महालसः—साश्चर्यमालोक्य त पुरुष सम्बोध्यापृच्छत्—किं भोः को भवान् कुत आगत कथञ्चानुसरत्यस्मान् ?

छायापुरुष —भगवन् ! नावगच्छसि मा चिरसहचरं त्वदायत्तमेव । अहमस्मि "अनुद्योगनामा" ते दुर्भाग्यभूमि । बहोः कालात् भवता सहैव विचरामि । पर नाद्यावधि ते साक्षात्कारता यात । अनएव न

भवान् मा परिचिनोति। साम्प्रतन्तु जातो मया सह ते दृढतरः स्नेह-सम्बन्धः प्रीति-परिपाकश्चेति। परीक्षितश्चानेकधा भवान्, यत् स्वबन्धुबान्धवैरपि सन्त्यक्त सर्वथा दु खाऽऽक्रान्तोऽपि न जहाति मत्स्नेहम्, तर्हि कथमह न भवतः सेवनार्थं त्वत्साहचर्य्यं श्रयेयम्? कथ वा कृतघ्न इव त्वा त्यजेयम्? अतएवाह यत्र यत्र भवान् चलिष्यति तत्र तत्रैवाहमपि चलिष्यामि। एतावत्कालपर्य्यन्त त्वया सेवितः सिद्धोऽह प्रत्यक्षभूतः सञ्जात।

महालस – सभय सकम्प, तदुत्तर दातुमशक्तः सन् सभार्यश्चिन्तातुरोऽभूत्। किन्तु सर्वथा विवशतया तमेव दुर्दैवभूत च पुरुषमेव शरणीचकार प्रोवाच च–भगवन्! दुर्दैव! रक्ष मा शरणागतम्। एते हि पृथुकास्त्वदीया एव। मुग्धानिमान् नाधुना स्वकृपाभाजनानि विदध्या। मामपि च कमपि सत्पथ निदर्शय येन मे, भार्यायाः, दीनानामेषा बालानाञ्च श्रेय, सर्वथादु खहानिश्च सद्य एव सम्भवेरिति। यदि चाधुनाप्रभृति मामसत्पथ नीत्वा दुख गर्ते पातयिष्यति, तर्हि कथमावयोः सौहार्द स्थास्यति? अतो भवता तथैवाऽऽचरितव्यम्, येनावयोर्मैत्रीभङ्गोऽपि न भवेत्। बालकाना कृते च न पुन सङ्कट समापतेत्। अहमपि च त्वदनुग्रहेण सत्कर्मरतः ससुख तिष्ठेयमिति।

दुर्दैवः––अहो मित्रवर्य्य! महालस!! मैव विचिन्तय, मा ते मनसि व्यथा भवेत्, मा स्म भूः क्वचिदपि कष्टभाक्। अरे यावदह ते सहचरः सन् स्थास्यामि तावत्तु भवानपि निर्भय "यावज्जीवेत् सुख जीवेत्, ऋण कृत्वा घृत पिबेत्। भस्मीभूतस्य देहस्य पुनरागमन कुतः?" इत्थ विहाय सकल चिन्तासन्तानम्, निर्भयो मया सह विहर। यावदह ते सहचरस्तावत् समस्ता देह-गेहजा, पुत्रकलत्रमयी वा चिन्ता, समन्ततो लोक-समाज-कुलपरम्परादिविविधबन्धनश्रृङ्खलितपदा सर्वदा विद्वज्जनतोषिणी सत्कर्मपरिपोषिणी दुर्व्यसनादिमोषिणी दुरन्ता चिन्ता विहाय सर्वदा-सौख्यसन्ततिसमुल्लासिनी चेतोविलासिनी सकलक्लेशनिवारिणी सिद्धा

वारुणी-तदर्थं द्रव्यसङ्ग्रहार्थं सद्य· फलद द्यूत कर्म सेवताम्। (एव-मुक्त्वा दुर्दैवस्तं महालस स्वेनैव साक नीत्वा मधुशाला, तत्राऽन्यसहचर-सनाथो हालासम्भृत-सीधुपात्राणि सज्जीकृत्य यथेच्छम्-त (महालस) वारुणी पाययित्वा स्वयमपि पीत्वा पथभ्रष्टमेव त व्यदधात्।

कदाचन विनैव परिश्रम पर्य्याप्त धन प्राप्तु दुर्दैव हि त महालस बहुलोभ प्रलोभनञ्च दर्शयित्वा द्यूतकर्मण्यपि तस्याऽप्यतिरुचि समकल्पयत्। कदाचिच्च यतः कुतोऽपि यत् किञ्चिदपि द्रव्य समुपार्जित लब्ध वा तस्मै दापयित्वा जागरितप्रलोभ वा त विधाय पुन· पुनर्द्यूत-व्यापारे योजयामास।

कदाचिच्च भूमौ निखातभूत निधि सिद्धाञ्जनप्रयोगेण दर्शयित्वा तदञ्जनसाधन-सिद्धिकर्मणि व्यापारयामास। तदानी नानामन्त्रतन्त्र-कर्मनिष्णातैः सह समागम कारयित्वा क्वचिदुच्चाटनादिप्रयोगेषु, कदाचन सम्मोहनकर्मणि, क्वचिद्वश्यविधाने, कदाचित्स्तम्भनसिद्धौ, कुहचन पादुका-गमनादिगुटिकासिद्धिसाधनविधाने व्यापृत विधाय क्षणिकचाकचिक्य-चमत्कृतिचमत्कृतचाक्षुष चञ्चलचेतस त समुन्मत्तमिव विगतव्यवसाय कृत्वा मृगमरीचिकाया पातयामास। इत्थ महालस नरसहचरो दुर्दैवदेवो मधुरमधुरान् नानाविधविषयान् दर्शयन् दुर्व्यसनसलग्न समन्तात् खिन्नमानस विचारनिमग्न विलोकयति स्म तदा सद्यस्त स्ववाग्जालैर्विमोहयन् तदीयचिन्ताशोकापविमोकाय लोकातीतरससमग्न कर्तु मधुशाला नीत्वा मैरेयमदोन्मत्त त विधाय हालाहलपानप्रियमिव द्राक्षाऽऽसवरसलोलुप चकार। क्रमेण च स· स्वयमेव मैरेयदोष-दूषितकलेवरो नित्यमेव मद्यसेवी मधु माध्वीकपानव्यसनी सवृत्त। तेन च स्वगृहस्थितमपि समस्त वस्तुपटल विक्रीय दैनन्दिनोपयोगिगार्हस्थ्य-जीवनसामग्रीमपि निखिला विपणिगता कृत्वा स्वयमेव साक्षाद् दरिद्रदेवभूत· सम्भूतो महाभूतः। किम्बहुना समासन्नदिगम्ब-

रत्वस्थितिकः सन् कपाली भूतेश इव महाभूतेशो द्विजेश स महालसो महालस एव सवृत्तो यथानामा तथागुणः ।

एवञ्च स दुर्दैवपुरुषो यथा यथा त प्रेरयतिस्म त स तथैवाऽऽचरन् दारुपुत्तलिकेव स्वकीयैन्द्रजालिकसङ्केतोपरि ननर्त ।

अथैकदा दुर्दैवात् कथञ्च वियुक्त स्वकीयपुत्रकलत्रादिभि सह समालपन् निजगेहस्थिति विचारयामास । तदानी मुक्तकण्ठः प्ररुदन् दुर्दशाञ्चाशेषकुटुबिनामालोक्य भृश सन्तप्तहृदय. सहृदयत्वभावनया चिन्तयामास तदा धारासम्पातमिवाऽश्रुपात कलयन् भृश व्यलपत् । गृहे च भोजनसाधनाभाव चाक्षुषीकृत्य दीनान् मुग्धतमान् पृथुकाश्च क्षुत्क्षामान् प्रत्यक्षमक्षिलक्ष्यीकृत्य, निजसम्पादितसर्वविधव्यापारस्य विपरीतमेव फल परिकल्प्य दोदूयमानमानसो दुर्दैव दुर्वचनविधेय विदधत् किमपि सुखसाधनादिक सङ्ग्रहीतु कमपि व्यवसाय विधातु प्रवृत्ति यथैव चिकीर्षति तथैव तदीयो दुर्दैवदेवः सद्यः सम्मुखमुपेत्य ततस्त निवर्तयामास निषिषेध च ।

इत्थ महत्कष्टमनुभूय दुर्दैवचक्रादात्मान मोक्तुकामो बहुप्रजः सकलचराचरकर्तार भार्गवीभर्तार विश्वविधातार धातार वा स्मार-स्मार सर्वतः ससक्त स्वमानस समाकृष्य भगवतश्चरणारविन्दयोः सपदि स्वमन समावेश्य ध्यान-धारणाभिः समाहित विधाय, सङ्कट-मुक्त्युपाय व्यचिन्तयत् निद्रोपासना विधातुमपि यत्नं कुर्वन् दरिद्रो निद्रयाऽपि दरिद्रीकृत एव । विचारप्रवाहपतितः स करुणावरुणालयस्य करुणाकणिकामवाप्य ततो दुर्दैवचक्राद्विमुक्त्यर्थ सचेतसि निश्चिनुते स्म । यदद्य प्रभृति दुर्दैवकथनप्रतिकूलाचरणमेव मह्य श्रेयस्करं भवितेति तद्विपरीताचरणमेव चकार । भगवदनुग्रहेण च स स्वसङ्कल्पा-नुसारमेव दुर्दैवकथननिरोधमेव सर्वदा विदधत् तद्विपरीतञ्च समाचरन् क्रमेण तमनुसरण विहाय प्रत्युत तमेव स्ववचनाऽनुसारि-निजकर्मचारिण-

मिव स्वकीयाज्ञानुकारिणमेव कलयामास। उक्तवाश्चैकदा स स्वकीय दुर्दैवम् ।

महालस —भगवन् ! दुर्दैव । मैव निष्कर्मणा मया भवतापि च स्थातव्यमेव । नैव चलिष्यत्यधुना गृहस्थसञ्चालन कर्म । निष्कर्मभ्य कोऽत्र समागत्य भोजनाच्छादनार्थ किमपि दास्यति ? अतोऽस्माभिर्यत्र कुत्रापि चलित्वा किमपि समुपयुक्त कार्यमेव सम्पादनीय येन बाला सुखिनो भवेयु. ।

साम्प्रत भूमि-क्षेत्रकर्षणादि कार्य बहुतर प्रचलति । कृषीवला अपि तथाविध कार्यं सम्पादयितु परिश्रमशीलानन्विष्यन्तीति तेषा सहायतार्थं वृत्तिञ्चाऽऽकलयितुमस्माभिरपि प्रयतितव्यमेव । त्वमपि मया सह सहचर सन् साहाय्यमाचरेति ।

दुर्दैव —अरे रे मित्र किमेव निषिद्धतर कर्म कर्तु व्याभृतो भवसि भगवन् त्वन्तु द्विजवर किमेव कृषक इव दैनन्दिनी ( वृत्ति ) समाच-रिष्यसि धर्मविरुद्धम् ? किमेव विप्रो भूत्वा हल कर्ष्यसि । लज्जास्पद-मेतन्नानुभवसि । न ते स्वरूपादनुरूपमेतत् कर्मेति ।

महालस —मैव तात ! समयोचितेय वृत्ति । सम्प्रति नान्या गति । क्व पुनरन्यत्र चलाव । कुत्र वा कीदृशी परावृत्तिर्मिलिष्यति या हि न कैश्चन स्पृष्टा समुच्छिष्टा वा कृता स्यात् । यामावा स्वीकुर्व । अतस्त्वमपि यथाऽह कथयामि तथैव कुरु यतात्मवान् । यथेष्टे वा कर्मणि मा मनो-नुकूले प्रवृत्तो भव । अत सम्प्रति ममानुसरणमेव श्रेयस्कर भवतेऽपि । अन्यथा मा विहाय यथेच्छ गच्छ यत्र ते मन । नाह स्वात्मविरुद्ध किमपि कारयितु कामये । अहन्तु सर्वथैव तवाऽनुकूल नाऽऽचरिष्यामि । त्वमपि विना किमपि प्रष्टु न मे विरुद्ध किमप्याचरे. ? यस्मिन् कस्मिन्नपि ते क्वचन प्रवृत्तिर्भवेत् तदा मदीयेनैव परामर्शेन त्वया भाव्यम् नान्यथेति अन्यथा मा विहाय सद्य पलायितो भव । नाह ते सहयोग समीहे ।

दुर्दैव —अरे ! किमेव विषमस्वभाव सवृत्त । त्व न मा समीहसे चेदहन्तु त्वा समीहे । नाह त्वा क्षणमेकमपि विहातु वाञ्छामि। तथा त्व मत्कथनानुसार चलसि तथाहमपि तव कथने बद्धादरोऽस्मि। ब्रूहि किं कर्तुं कामयसे त्वामेवाहमपि सर्वथाऽनुकरिष्यामि ।

महालसः—भगवन् ! नैव निरुद्योगः सन् स्वकार्य साधयितु शक्त', यतो हि 'उद्योगिन पुरुषसिहमुपैति लक्ष्मीः" इति शास्त्रप्रमाणेन विनोद्योगेन न किमपि सेत्स्यति कार्यजातम् । यदि न मिलिष्यति किमपि कार्य तर्हि विपिन गत्वा काष्ठभारमेकत्रीकृत्य, अत्राऽऽनीय विक्रेष्ये। तेनैव निर्वाह सम्पादयिष्यावः ।

दुर्दैव —भगवन् ! बहुप्रज ! नरनारायणमय ते कायम् । ईदृश मृदुलतम गात्र क्व महति कर्कशे भयङ्करश्रमावहे कर्मणि प्रयोक्तुमुत्सहसे । न त्व वनेचरः यो हि तथाऽऽचरिष्यति । सम्प्रति प्रचण्डातपे ग्रीष्मे घोरतमाया खरसन्तापवेलाया, कि वा प्रावृषि भयङ्करधारासम्पातकाले च तथाविध तपश्चरिष्यति ? अतोऽत्रैव यथासुख सानन्द तिष्ठ, शुष्क रूक्ष यल्लब्ध तदेव भगवत्प्रदत्त मत्वा प्रसादमिव भुङ्क्ष्व । मैव तथा कर्तुं विचिन्तय ।

महालसः—सक्रोधम् - किमेव पुनरपि मा कापुरुष विधातु यतसे ? मा मा मामेव पुनः कदाचन स्वपरामर्श प्रदातु यतेथाः । कृपया त्वन्त्वत्रैव स्वपिहि न ममानुसरण कलय । अहमेवैकाकी वन गमिष्यामि यथेच्छञ्च स्वकार्यं साधयिष्यामि । इत्युक्त्वा प्रस्थितः । दुर्दैवमपि सद्यस्तमनुसरति । ईषद्वक्रकन्धरः सन् महालसः स्वपृष्ठलग्नमिवाऽऽयान्त दुष्ट त दुर्दैवदेवमालोक्य व्यचिन्तयत् । नाऽय मेऽनुसरण त्यक्ष्यत्यतिदुर्जन. । अत. समुचितमवसरमवाप्यैन क्वचन हत्वा कस्मिन्नपि गर्ते निपात्य महापापादस्मान्मुक्तमात्मान साधयिष्ये । एव निश्चित्य वनाद्वनान्तर गच्छन् पाददण्डिकामयी पद्धतिं समाश्रित्य, तथैव पाददण्डचा

महाघोरतरारण्ये प्रविष्टोऽभूत् स महालस । तदनुधावन्नेव सोऽपि दुर्दैवहतकः तत्सहचर सन्नतिष्ठत् । मार्गे प्रचलन् स (महालसः) एकत्र विविधशाखाप्रशाखापरिमण्डितसघनकुञ्जायिते सुरम्यस्थले समागत्य स्वविज्ञानविजृम्भितानुभवेन तत्स्थल निधिसम्भृत विविधतरुवरलताप्रतान सन्तानसमाश्लिष्ट स्निग्धमधुरमनोज्ञविहगकुलकूजितकमनीय विशिष्ट-शिलोच्चयावृतमालक्ष्य निधिनिधानभूमिस्थलमेतदेवेति विज्ञाय, तदुपरि परिचायकचिह्नभूत शिलोच्चयमपि स्थिरीकृत्य व्यचिन्तयत् - पुरापुराणेष्वपि श्रुत यन्नरपतयः शत्रुभिः समाक्रान्ता. स्व राज्य विहाय रत्नराशिञ्च नीत्वा एतादृश एव स्थले स्वा स्थिति विधाय सकल निजनिधिं सुरक्षित विधाय महता प्रस्तरखण्डेन समावृत्य, समाच्छाद्य रक्षन्ति स्म । भगवान् दयालुर्यदि दययेत तदा किमस्ति दुरापम् । भूयान् कष्टतर समय. समापितः सम्प्रति तु विधास्यति स्वकरुणाकणिका, जीवनशेषे वयसि मुग्धपृथुकपरिपोषणायेति । समागतश्चाय भूयोभूय. कष्ट सहमानस्य मे दुर्दैवविपाकसमाप्तिसमय । विचिन्त्यैव स्वसमीपमुपस्थित दुर्दैवपुरुष प्रावोचत्—

महालसः—भगवन् ! शीघ्रमेहि साहाय्यमाचर । आवामेव सयुक्तशक्त्या महाशिलोच्चयमेनमपसार्य्य ततोऽधस्तात् विद्यमान पूर्वतनराजभिर्निखात महानिधिं निःसार्य्य निधीशौ भवेव ।

दुर्दैवदेवः—अरे मुग्ध मित्र ! किमेव व्यर्थं मृगमरीचिकाचाकचिक्य चकितचक्षुष्कः सन् मुधाप्रलोभनगर्ते निपतसि । क्वाऽत्र हिस्र-भयानक जन्तुसञ्चरण – सङ्कुलितस्थले निर्जन – जनसञ्चारबहिर्मुखे कः समागत्य मूढधी स्व निधिमानीय खात्वा चैव निश्चिन्तः परित्यज्य गच्छेत् कुतस्तस्याऽत्र सम्भावना । किमर्थं व्यर्थ प्रयतेथा ।

महालस —कृतसुदृढनिश्चयस्तस्य तथाकथितमवहेल्य सकोपमुवाच-भगवन् पुनरपि मामित्थ विधातु शुभे कर्मणि विघ्नमाचरसि । न चेन्-मत्साहाय्यं कर्तुं कामयसे तर्हि सद्य पलायस्व । नाहमपि तव सहयोग

स्पृहामि । कृपया पृष्ठ दर्शय, विघ्नकारिण सहयोगोऽपि प्रतिबन्धको भवति ।

दुर्दैवदेव —इत्थ निर्णयात्मक कठोरतम शब्द स्पष्टमभूतपूर्व-माकर्ण्य, निर्णीतवान्-यन्नायमधुना मत्कथनमनुपालयति । अतोऽधिक च मे महयोगमपि नेच्छति । अतोऽस्याऽऽनुकूल्यमेव मयाऽऽचरितव्य-मिति - विचिन्त्य प्रत्यवोचत् - भगवन् ! बहुप्रज ! नैव निराशो भव । तवानुकूलमेवाऽऽचरिष्यामि न ते कथनविरुद्ध किमपि तर्कयिष्यामि । चलतु भवान् यथेष्ट स्थलम् । करिष्यामि ते साहाय्यम् । इत्युक्त स महालस पुनस्तत्रैव समागतो यत्र तन्निधिस्थलमासीत् ।

महालस —स्वशास्त्रविज्ञानेन नानातान्त्रिककुलसहचरणसमालाप-समालोकितनिधिदर्शनाऽञ्जनप्रभावै श्रुतानुभूतचिह्नैश्च दृढ सुनिश्चित कृत्वैव तदर्थं यत्नशील सवृत्त ।

अत्राऽऽगत्य च स्वसहायतार्थमाकारितवान् दुर्दैवमिति । दुर्दैवदेव ! स्वा प्रदर्शयाऽपूर्वा शक्ति, यया प्रस्तरशिलोच्चयमपसार्य्य ततोऽधस्ता-द्विराजमान महाराजकोषमान निधि नि सारयाव ।

दुर्दैवदेवः - अरे महालस ! किमेव मामपि पीडयसि स्वात्मानमपि व्यर्थकष्टमनुभावयसि । क्वाऽत्र हिंस्रव्याघ्रादिबहुलेऽरण्ये निधिनिखातः ? को नाम भाग्यहीनोऽत्र समागत्य स्व वसु स्थापयिष्यति । हन्त ते हठः ।

महालस·—पुनस्तथैव सकोपम्—अरे ! भद्र पुरुष ! पुनरपि मा हतोत्साहमेव कलयमि । मौनमालम्ब्य स्थीयताम् । नाशुभा काञ्चन-चेष्टा विदध्याः काञ्चनोपलब्धिसौभाग्यसमायोजनसत्कर्मणि । सम्प्रति तु यथाह कथयामि तथैव, अविचारितसकलसमालोचनाप्रसार, विहाय कुतर्ककुविचारप्रचार, विधेहि सकलमविकल मामकीन कथनम् । इत्युक्त्वा बलात् समाकृष्य त तस्मिन् व्यापारे नियोजयामास । यथा हि उभावेव तं महशिलोच्चय स्वात्मशक्त्या पूर्णपुरुषार्थेन च समपसारितवन्तौ,

तथैव गुहाद्वारमवेक्ष्याऽभ्यन्यर निजदृङ्निपात अकार्ष्टाम् तथैव प्रस्फुरित-विविधविधकिरणसमूह महेन्द्रधनु स्वरूपेणैव विस्तारितस्वस्व-प्रकाश महामहारत्नराशिमद्राष्टाम्। सपदि तयोर्दृष्टिः स्फुरितविविधमयूख-मालचाकचक्यचकिता सवृत्ता। तदा सः दुर्दैवमवादीत्—भगवन् त्वमत्र सरक्षणाय सावधानस्तिष्ठ यावदह स्पष्ट प्रतीयमानक्षेत्रादि-कस्थल गत्वा कञ्चन कृषीवल सम्प्रार्थ्य तस्मात् तदीया शकटी याचयित्वाऽऽनयामि। इत्युक्त्वा प्रचलितः—महानिधिविलोकनेन सर्वाधित-महोत्साह स महालस· सत्वर क्षेत्रात्—क्षेत्रसीमानमतिक्रम्य सद्यस्तत्क्षेत्र-मुपेत्य कृषीबल तच्छकटी ग्रहीतुकाम. प्रशसावचनानि पुरस्कृत्य प्रार्थयामास।

महानुभाव! कृषीबल पितृव्य! जानासि सर्वमेव भवान् मामकीना परिस्थिति तु। समागत्याऽस्मिन्नरण्ये स्वयमेव परिश्रम विधाय काष्टभार सगृहीतवान्। अत त स्वगृहावधि समानेतु नयामि ते शकटीम्। आज्ञापय बलीवर्दानानेतुम्। विधेहि साहाय्यमिति।

कृषक —बन्धो! बहुप्रज! जानामि सर्वा ते स्थितिम्। प्रसन्नोऽस्मि त्वदाचरणेन सद्व्यवहारेण। विधास्यामि त साहाय्यम्। गच्छ त्वमेव मे गोष्ठम्। तत' स्वेच्छानुसार बलीवर्दावानीय शकटीमेना योजयित्वा स्वकार्य सम्पादय यथावसर शकटीमपि येन केनापि प्रेषयिष्यसि नातिशीघ्रता तत्कृते। गच्छ कार्य साधय।

महालसः—भगवन् पितृव्यकल्प, रामनाथ! भूरि-भूरि समुपकृतोऽस्मि भवतौदार्य्येणाऽऽर्य्यचरितेन च। इत्युक्त्वा तद्गोष्ठाद्धृष्टपुष्टौ बलीवर्दौ समानीय शकटी च योजयित्वा सद्यः समागतः।

ततो निधिस्थले समागत्य सर्वविधधान्यसम्भरणसञ्जासमलङ्कृते शकटे तत्रत्य सर्व सुवर्णं बहुविधञ्च रत्नराशिसम्भृत स्वर्ण रजतकल-शनिचयञ्च तस्माद्गर्ताद् बहिर्निष्काश्य शकटे सस्थाप्य - समन्ताद्व-स्त्रावृत परिकल्प्य स्वमनसि व्यचिन्तयन्महालसः, यद्यय मया स पुनर्गृहं

चलिष्यति तर्हि पुनर्भव मा महान्धकूपेऽवश्यमेव निपातयिष्यति । अत एवैतमस्मिन्नेव गर्ते निपात्य प्रस्तरखण्डपिहितमुखञ्चैनं विधाय चलेयमत एव मे श्रेयो नान्यथेति दृढं विचिन्त्य प्रोक्तवान् दुर्दैवम्—भगवन् ! सर्वमेतदाहृतमुताऽवशिष्टमप्यस्ति किमपीति ।

दुर्दैवदेवः—नाऽस्ति किञ्चिदवशिष्टं सर्वन्तु त्वया गृहीतमेव । माऽधिकाधिका लोलुपता प्रकटय । शीघ्रं चल गृहमुपेत्य यथास्थानं सर्वं संस्थाप्य यथेष्टं धनमादाय शुण्डास्थानमवाप्य माध्वीकं यथेच्छं सेविष्यावहे । विलासान् विरचिष्याव ! साम्प्रतन्तु सम्पन्नौ स्वः ।

महालसः—मैवं समुपेक्षां विधेहि पुनर्गर्तस्य सिंहावलोकनमेव करणीयमन्यथा सङ्कटापन्नावपि भवितुं शक्ष्यावः । कदाचन कश्चनाऽऽगत्य पश्येदिदं स्थलं, पुनरन्विष्य चास्मानपि सङ्कटग्रस्थान् कलयेत् । अतो रहस्यमपि प्रकटितं न भवेत् कार्यन्तु साधितमेव । इत्युक्त्वा गर्तैकदेशे किञ्चिदवशिष्टं स्वर्णादिकं विलोक्य बलात् तं दुर्दैवं—तस्मिन् प्रवेश्य अन्यान्यान्वेषणव्याजेन गर्ताभ्यन्तरभागे गतवति च तस्मिन् दुर्दैवे सद्यः स महालसः स्वात्मशक्त्या तं महाशिलोच्चयं गर्तमुखोपरि प्रस्तारयामास । गर्ताऽभ्यन्तरे एव स दुर्दैवपुरुषो रुद्धोऽभूत् तत्रैव च पञ्चत्वं गतवान् ।

सम्प्रति सः महालसः सपदि निरालसः सन् दुर्दैवचक्रान्मुक्तोऽभूत् । विहितपरिश्रमश्च स बहुप्रजः सानन्दं स्वगृहमागत्य सर्वविधमहासम्पत्तिसम्पन्नः शनैः शनैः स्वव्यवहारेण बुद्धिवैभवेन व्यापारप्रसारेण सकलधनिनां मध्ये श्रेष्ठिनां नागरिकाणाञ्च मध्ये सुप्रतिष्ठितः महाभाग्यशाली सर्वसम्मानितः समादृतश्च सञ्जातः । सम्प्रति सपुत्रकलत्रः सर्वदा दैवीं सम्पदमनुभूय ससुखञ्च न्यवात्सीत् । व्यचिन्तयच्च—समुपदिष्टवांश्च सः—यत् सत्यमेतत्—

"यावदनुद्योगस्तावद् दुर्भाग्यम्" ।

"निरालसश्च सोद्योगो लभते रत्नसञ्चयम् ।" इति ।

# प्रतिफलम्

एकदा कस्मिंश्चिद् ग्रामे यशस्वत्सिहनामा ग्रामाधीश आसीत्। तस्य च विविधपादपपुञ्जसमलङ्कृतमुद्यानमासीत्–तस्मिन् - नानाविधफलभारावनतशिखराणि तरुकुलान्यासन् । विविधाव्रततिततयः सुमनोभरै. सुसज्जितास्तदुद्यानलक्ष्म्या. सहचर इव शोभन्ते स्म। तस्य सरक्षणार्थमासीदेक सौम्यः सुशील. स्वामिभक्तो वीरूनामा मालाकार ।यशस्वत्सिहोऽपि स्वभृत्यान् प्राणतोऽप्यधिकान् मनुते स्म। स मालाकारोऽपि तस्यातीव प्रिय आसीत्। तस्य शीलस्वभाव धर्मनिष्ठता स्वामिभक्तत्व च विलोक्य, अतीवहृष्टमनास्तमधिक तीतिपात्रमकरोत्।

सहसैव कस्याञ्चिदेकस्या निशीथिन्या न जाने यशस्वत्सिहः कुत्र गत इति न केनापि दृष्टम्। किमासीच्च तस्य देशान्तरगमनस्य रहस्यम्! निशीथिन्यामेव स किमर्थं गतः? इति न केनापि ज्ञातम्। तद्गमनानन्तर वीरूरपि तद्गृह परित्यज्य यत्र कुत्राप्यन्यत्र गत । किञ्चिद्दूरवर्त्तिनि ग्रामे कस्यचन श्रेष्ठिन उद्याने स्वा वृत्तिं कृतवान्।

कियत्कालानन्तर स वीरू. (मालाकार) एकदा स्वस्वामिनो यशस्वत्सिहस्येव नवस्वामिनस्तत्रैवोद्याने यदा स लघुपादपाना सरक्षणाय तेषु च खादपूरणाय आलवालेषु कठिनीभूता मृत्तिका शिथिलयन्

लोहकुशाग्रेण खनतिस्म समन्तात् प्रसृतान् लघुपादपाना जटाजालान् वा कृन्तति स्म तदा सहसैव कस्यचन पादरक्षणशब्द यदुपानहो टपटपशब्दश्च श्रुतिपथमुपगत । यदा सः ( वीरू ) स्कन्धोपरि तिर्यग् वदन कृत्वा पश्यति तदा कञ्चन नवागत विशिष्ट सम्भावित वा पुरुषमपश्यत् । आकारैर्वेषविन्यासैश्च स समृद्ध कुलीन प्रतीयते स्म ।

दृष्ट्वा च त वीरू सहसोत्थाय ननाम ।

आगन्तुक –कि भो भवानेव वीरू मालीति पृष्टवान् ।

वीरूः-अहमेवास्मि महाभाग !

आगन्तुक –कि भो ! स्मरसि किमु दशवर्षेभ्य पूर्व भवान् कुत्र मालाकारत्वमाचरन्नास्तेति पृष्ठवान् ।

वीरू –अहो ! महाभाग ! किन्न स्मर्यते ? कथ कार विस्मर्यते तादृश परमकारुणिको महामना ह्यभूतपूर्व ।

स्वामी श्रीयशस्वत्सिहो नाम दयासागर । तस्यैव महापुरुषस्योद्याने कार्य कुर्वन् तस्य कृपापात्र मालाकार आसम् । कि बहुना तेषा परमोदार चरिताना नाम यदि निर्जनेऽपि प्रात कश्चित् स्मरेत् न स क्षुधार्दित कष्टभाग् भवेत् । तद्दिनेषु निर्जनेऽपि तदर्थं कश्चिद् भोजनोपायनमादाय समायायादेव ।

भगवन् ! ते साम्प्रत कुत्रासते यदि भवतो विदितञ्चेत् तेषा कुशलोदन्तकथनेन समनुग्राह्योऽय जन । ते तु सहसैव बिना किमपि कस्मैचित् स्वाभिप्राय प्रदर्श्य जाने कुत्र गता । नाह तादृश स्वामिन त्वस्मिन् जन्मनि लप्स्ये। यदि तेऽत्र विद्यमाना अभूवन् नाह तान् विहायान्यत्र भृत्यत्वमकार्षम् । इति निगदन् तेषा गुणवर्णनमारभत । तद्विहितानामुपकाराणा गान मादृशो मूढस्तु कर्तुमपि न प्रभु. । तेषा कृते किमस्ति कथनीयम् इति कथयन् रुद्धवाग् बभूव ।

नवागन्तुक –अहो ! अतीव खेदास्पदमेतद् एतदेव कथनायात्र

समागतोऽहम् । श्रीयशस्वर्तिसहमहोदयास्तु तत्रैव विदेशे लोकमिम परित्यज्य सहसैव लोकान्तर गता । न साम्प्रत तेऽत्र लोके ससारे वा ।

वीरु—श्रुत्वैव वीरु वातव्याधिना रुद्धाङ्ग इव स्तब्ध शून्यो गत-प्राण इव क्षणार्ध निश्चेष्ट भ्रान्त इव सचकित उन्मत्त इव प्रलपन् स्वहृदयगतभावान् करुणक्रन्दनेन प्रकटयति स्म। क्षण विलप्य पुन साहसेन जगाद । अहो ! स्वकीयस्वामिश्रीयशस्वर्तिसहसदृशस्तु ससारेऽस्मिन् न भूतो न भविष्यति कश्चिदन्यो धर्म्मात्मा करुणासिन्धु-श्चेति । किं भो ! महानुभावा भवन्तोऽपि तेषा सम्बन्धिनो लसन्ति !

नवागन्तुक—नाह तत्सम्बन्धी—अहन्तु तेषा वाक्कील ( वकील ) एवाऽऽसम् ।

श्रीयशस्वर्तिसहमहोदयास्तु स्वलोकान्तर प्रति प्रस्थानात् पूर्वमेव स्वजीवनकाले कस्मिंश्चिदेकस्मिन् धर्मलेखे उत्तराधिकारलेखे च स्व-कीयायाश्चलाचलसम्पदो विभाग कृत्वा खण्डशो भागान् विधाय अनेक-सस्थाभ्य, स्वकीयग्रामपाठशालाभ्य औषधालयार्थम्, पुस्तकालयाय, वाचनालयाय, सार्वजनिककार्येभ्य, सर्वजनीनाय च समुपयोगाय स्वं धनराशिं प्रायच्छत् ।

वीरु—श्रुत्वैव सर्व स्वमनसि प्रसन्नोऽभूत्, न जाने का का वा कल्पना कल्पितवान् । तत स नवागन्तुक स्वकीय-परिधान-वस्त्राऽ-भ्यन्तरत काञ्चनैका पोट्टलिका बहिर्निष्काश्य हस्ते धृत्वा वीरू सम्बोध्य, भो मालाकार महोदय ! इमा धनपोट्टलिका गृहाण, श्रीयशस्वर्तिसह इमा स्वमुद्राङ्किता मम हस्तादेव त्वत्समीप प्रेषयितु दातुञ्च तुभ्य सुरक्षिता प्रेषितवान् । इति निधिभूता ता मालाकारहस्ते निक्षेप इव न्यदधात् ।

वाक्कीलवर—तत सद्य एव मालाकारहस्तादादाय पोट्टलिकाया मुखोपरि सुदृढा जतुनिर्मिता मुद्रामुत्पाटच शीघ्रमेव ता ( पोट्टलिका ) नीचीनमुखी विधाय "झन्ननन" इति सहस्रद्वयमिता रजतमुद्राः

गणयित्वा मालाकार समर्पितवान् - यदा मालाकारो हि जतुना मुद्रितां ता धनपोट्टलिका दृष्ट्वा साश्चर्यं पश्यन्नेव न व्यजानात् यत् कथ ततो तद्धन बहिर्निष्काश्य भविष्यतीति चिन्ता-विचारनिमग्न एव कि कर्तव्य-विमूढ इव केवल व्यलोकयदेव ।

वीरु — प्रथमवारमेव तथाविधा तावत्सख्यामयी सहस्रद्वयी विलोकयामास । न हि तत पूर्व सहस्रसख्यादर्शनाऽवसर एव नाऽवाप्तवान् । स स्वभाग्य विचित्रघटनाचक्रावलोकनसौभाग्यशाली भविष्यतीति विश्वासमेव नाऽकार्षीत् । कदाचन विचिन्तयति स्म किमिद स्वप्नमेव पश्यामि ? आहोस्वित् प्रत्यक्षमक्षिलक्ष्यीभूतमेवैतद्विलोकयामीति सम्प्रति जागरित एव स्थितोऽस्मि, नाधुना स्वप्न, कुतो मे व्यामोहः नैतदिन्द्रजालमपि - प्रत्यक्ष गणयामि-इति साश्चर्य भ्रान्तविमूढभावो न विश्वसिति स्वात्मन्यपि ।

सर्वमिद श्रीयशस्वत्सिहस्य विदेशगमनकालात् प्रागेव कृतस्य तदुद्याने भृत्यत्व-परिश्रमस्य वेतनरूप मालाकारस्यैव प्रतिमास प्रदेय द्रव्यमेव तदीयकोषे एव सुरक्षित सुसञ्चितमेव सुस्थापितमासीत् । यदा च स यशस्वत्सिहो देशान्तर गतवान् तदा तदीयैरेक कर्मचारिभिः सरलः सः विमुग्धो मालाकारो निष्काशितोऽभूत् । स च तत्रैव सकल स्वभृत्यिका-समुपार्जित द्रव्य परित्यज्यान्यत्र यत्र कुत्रापि भृत्यिका कल्पयित्वा निर्वाहार्थ गतवान् । तदैव तदीय द्रव्य द्विगुणीकृत तत्स्वामी श्री-यशस्वत्सिहः स्वगमनात् प्रागेव तदर्थ सुरक्षित जतुना सुदृढ मुद्रित कृत्वा सुरक्षित परिकल्पितवान् येन नान्यः कश्चनाऽन्यथा विदध्यात् तदीय-पारिश्रमिकनिधिभूत फलम् । अतो धर्मात्मा श्रीयशस्वत्सिहः मह्यमिद मे पारिश्रमिक स्वकीयसेवाया फलस्वरूप प्रेषितवानिति । धन्यः सः लोकातीतचरितो मे प्रणयी स्वामी । भगवान् तदर्थमखण्ड स्वकीयानन्द-मयं स्थान निर्णीय प्रयच्छतात् । इति ।

———

# यदस्मदीयं न हि तत्परेषाम्

अथैकदा स एव वीरुः मालाकारः स्वपूर्वस्वामिना—श्री यशस्वत्सिहेन प्रेषिता द्विसहस्रमिता मुद्रा लब्धवान् । स हि तावत्परिमाणक धनराशि प्रथमवारमेवावलोकितवान् ।

परञ्च यत्र स निवसति स्म न तत्र तस्याधिकारे किमपि सुरक्षितं स्थानमासीत् । केवल रात्रौ निवासार्थमेका लघुकाया पर्णकुटी तदर्थमास्त । साऽप्येकान्तनिर्जने स्थले, न तत्रैतावती मुद्रा रक्षितु शक्याऽसीत् । अत स चिन्तामग्नो व्यचिन्तयत्—कुत्रैताः मुद्राः रक्षणीयाः यन्न कश्चनान्यो जानीयात् । पुनरहमेव—यथावस्थिताः सुरक्षिता लभेयेति । इत्थ विचिन्त्य तस्य पर्णकुटी समीपे एवैकप्राचीनतमो महाऽश्वत्थपादपः सुविशालकोटरः शाखाप्रशाखाप्रकरपरिराजितो महाकाय आसीत्, तमेव सुस्थिर स्वनिधिरक्षणदक्ष समक्षमेव सर्वदाविद्यमानमालक्ष्य तस्यैव कोटरे निक्षिप्त सुरक्षित मत्वा तथैव कृतवान् ।

सम्प्रत्ययञ्च मरुदेशवास्तव्यस्य कस्यचन वणिजो गृह एव भृत्य सन् तस्यैवोद्याने मालाकारत्वं, कार्यं, सम्पादितवान् । नाधुना स. यथापूर्व तथाविध धर्मात्मान स्वामिनमवाप्तवान्—वर्तमानकालिको-

ऽयन्तु स्वामी कृपणो लुब्धकः शङ्कालुर्वणिक् विद्यते, न स तथाविधः स्नेही दयालुर्वा । न क्वचन स्निह्यति न वा तस्य सुखे दु खे च कदाचन साहाय्यमेवाचरति । नैतावदेव अपितु आधुनिको नवीनः स्वामी यथाविध स्ततोऽपि द्विगुणतरो धूर्त शठः क्रोधी तस्करश्च तस्य पुत्र आसीत् । स च गुलाबसिहनामा धूर्तशिरोमणिः किन्तु चञ्चलो बुद्धिमाश्च, चौराग्रगण्यः समभवत् । स हि सर्वदैवास्य मालाकारस्य पर्णकुटीसमीप एव सर्वदा क्रीडन् सर्व दिन मालाकारस्यैव चेष्टा प्रेक्षमाणस्तिष्ठति स्म । सर्वदैव मालिकेन वीरुणा सह समालपन् तत्पार्श्वे स्थित सन्नेव समस्ता मालिक-प्रयुक्ता चेष्टा चेष्टमानः सहयोगव्याजेन मालाकार-कृत्य विलोकते स्म । मालाकारोऽपि कथ त तथाविध चेष्टमानमपि स्वस्वामिपुत्र कथकार निषेद्धुमपि शक्नुयात् । अतो विवश एव सर्वदा तदनुपस्थितिमेव काङ्क्षमाणः तदक्षिपात वञ्चयित्वैव नित्य स्वकीय नित्यनैमित्तिक वा कार्यं सम्पादयतिस्म वराको मालिकः । किन्तु दुष्ट सः वणिक्सुतो यत्र कुत्रापि तिष्ठन्, क्रीडन्, काकदृष्ट्या मालाकारस्य सकला चेष्टा विलोकयन्नेवाऽऽसीत् ।

यदा च स· वीरु (मालिकः) ता सहस्रद्वयी मुद्रा तस्मिन्नश्वत्थकोटरे सुरक्षिता न्यदधात् तदा स एव कुटिलो वणिक्-पुत्रो न जाने कथ कुत्र-स्थितो व्यलोकयत् । मालाकारो हि समन्ततः पश्यन् न तत्र कमपि जन विज्ञाय ता द्रव्यपोट्टलिका कोटराऽभ्यन्तरीकृत्य निश्चिन्तोऽभूत् तस्मिन्नेव निधानरक्षणकाले धूर्तः सः लतान्तराले पादपसङ्घमध्ये प्रच्छन्नः सन् सर्वमद्राक्षीत् । किन्तु मुग्धो वीरुः न तं व्यजानात् । यथाहि सः माला-कारः ता धनपोट्टलिका तत्र संरक्ष्य निश्चिन्तः सन् स्वपर्णकुटीमाश्रित-वान्, निशङ्कः स यथा नियम प्रत्यह स्वव्यापारे सलग्नो नाऽशङ्कत किमप्यानर्थक्यम् । धूर्तो नवीनश्चौरो वणिक्पुत्रश्च ततस्ता पोट्टलिका चोरयित्वा स्वगृहमानीतवान् । समागत्य च स्वपित्रे परमलुब्धकाय वणिजे समर्पितवान् । प्रोक्तवाश्च—

गुलाबसिंहः—अयि पितृचरणाः ! इय पोट्टलिका मयाऽऽनीता, इमा सुरक्षिता स्थापय। एषा हि अस्मद्भृत्यस्य वीरुनाम्नो हि मालाकारस्याऽस्ति। स हि महानेव भाग्यहीन यो हि तावत्परिमाणा धनपोट्टलिकां प्राप्याऽपि न सुरक्षिता कर्तुं प्रभुरभवत्।

यथा ह्यनेन पिप्पलकोटरे निहिता सुरक्षिता स्थापिता, ततो मया सपद्यपहृता—यतो ह्यह तत्पार्श्वस्थे लतामण्डपे प्रच्छन्न सन् सर्वां तदीया चेष्टा निधानरक्षणप्रक्रिया दृष्टवान्। यथा ह्ययं तत्र निक्षिप्य स्वपर्णकुटी गतस्तथैव मया ततः सा धनपोट्टलिका तत्क्षणमेवोड्डापिता (चोरिता) सत्वरञ्च ततो धावता मया समानीय भवद्भ्यः समर्पिता। रहस्यमेतन्नान्यो जनो जानीयादिति सुगोप्यमेव रक्षणीयम्।

तत श्रेष्ठी स वणिक् ससन्तोष तच्छ्रुत्वा प्रफुल्लितवदनोऽभवत्। स चैकान्तमाश्रित्य तस्या भस्त्रिकाया सुरक्षितान् तान् रूप्यकान् बार बार गणयामास। रूप्यकाणा गणनाक्रमे तथा सलग्नोऽभूत् यत् तत्पुत्रेण गुलाबसिंहेन किमभिहितम्, कुत आनीता कथ लब्धा कस्य चोरिता समपहृता वेति किमपि नाऽवगतवान्।

अहो सहस्रद्वयी, पूर्णा विंशतिशतसख्यामयी, सहस्रयुग्मसम्भृताऽसौ पोट्टलिका। अहो चातुर्यं पुत्रस्य सुयोग्यः खलु मे सिद्धहस्तो द्रव्यापहरणे दक्षो बाल। वस्तुत एव वणिक्पुत्र। इत्युन्मत्तवत् प्रलपन् प्रोवाच स्वसुतम्।

वणिक्—वत्स ! गुलाब ! त्वमतीव चतुरो बुद्धिमान् सुष्टु कृतम् गच्छ यथेच्छ विहर बहिरुद्याने, गोष्ठे वा (गोकुले वा)। इत्थ बालक तं क्रीडनाय बहि सम्प्रेष्य, तद्गमनानन्तर सः वणिक् पुनः पुनरपि गणयन् न तृप्तिमाप्नुयात्।

इतश्च मालाकार सहस्रद्वयमितमुद्राणा लाभेन भृश प्रीतो व्यचिन्त-

यत् यदहमधुना सहस्रद्वयेन तु यावज्जीवनमेव ससुख स्वायुष शेष-भाग सानन्दमेव यापयिष्याम्येव किन्तु नावगच्छति च सः वराकः यत् तद्रक्षिता सा धनपोट्टलिका तु दुष्टेन परमचौरेण तेन वणिक्पुत्रेण चोरयित्वा स्वगृह नीतेति। तस्य जीवनसर्वस्व तत्कृतेऽप्यमूल्यम्, नादृष्टपूर्वमासीत्, तदपहृतमेव।

पुनश्चन्तियच्च, यदह वणिज समीप गत्वा स्वात्मना समुपार्जितमपि, सुरक्षित यद्रक्षित, तत्सर्वं स्वकृतसेवायाः पारितोषिकस्वरूप, तत्सविधे सुस्थापित, वेतन गृहीत्वा, स्वग्रामञ्च गत्वा, सुखेन शेषजीवन यापयिष्याम्येवेति, निश्चित्य तद्दिन ताञ्च रजनी ससुख सुलभनिद्रया यापयामास।

अत्र च स श्रेष्ठी वणिगपि तावत्परिमाणक द्रव्य स्वपुत्रेण चौर्यकर्मणा समानीतमिति विचिन्त्य, सर्वं तथ्यञ्च विज्ञाय तावन्त चोरित धनराशि स्वगृहे तु रक्षितु सर्वथाऽयोग्यमिति मत्वा स्वसुतस्य चौर्यकर्मणोऽपि त्रस्त' रहस्यभेदप्रकटनभिया च ता पोट्टलिका समादाय स्वकीयोद्यानस्थिते तस्मिन्नेवाश्वत्थीयकोटरे यत्र न कस्याप्यन्यस्य गतिरिति निश्चित्य न तत्र गत्वा कोऽपि कर्मचारी चौरो वा तस्मिन् कोटरेऽनिश्चिताऽवितर्किते शङ्कानिरापदे चाऽन्वेष्टु वा मति विधास्यतीति निर्णीय तत्र गत्वा ता यथा पूर्वां निक्षिप्तवान्। यत्र मालाकार सर्वप्रथम निचिक्षेप मालाकार इव श्रेष्ठी स वणिगपि तत्र रक्षित्वा सुनिश्चिन्त समभवत्।

अहो भगवतो विधातुं, भाग्यस्य, कठिनपरिश्रमस्य वा फल मालाकारस्य प्रस्वेदपातनसाधितो स द्रव्यराशिः कथमन्यत्र गन्तु नेतु वा शक्य· स्यादिति यतो गतस्तथैव पुनरागत इति।

अथ प्रभाते मालाकारः स्वस्वामिनो वणिज· सविधे गत्वा स्वाऽभिलषिता विचारधारां प्रकटीचकार। उक्तवाश्च भगवन्!

वीरु—सम्प्रत्यहं रुग्णो विशिथिलसर्वावयवो बृद्धश्चेति कार्य-विश्रामयोग्यः सवृत्तः। नाधुना मे सम्यग् हस्तौ पादौ वा प्रसरत न वाऽधुना भवत उद्यानस्य चाशेष कार्यमपि सम्पादयितु प्रभुः अतः सम्प्रति विश्राम भगवतः कामये। स्वगृह एव शेषमायु यापयिष्यामि। गृहं प्राप्य च भगवत्स्मरणमेव मे कर्तव्य, पालयिष्यामि। अतोऽद्यावधि यत्कि-मपि मे वेतनादिक दातव्यमस्ति, तत्सर्वं प्रदाय गन्तुमेव मा विसर्जयेति मदीय श्रीमत्कोषे यत्सुरक्षितमस्ति तत् प्रदीयता कृपयेति।

वणिक्—मालाकारस्याभिलषित श्रुत्वा, स्वपुत्रेणानीतं चौर्य-कर्मणा गृहीत सर्व तदीय धनञ्च स्मृत्वा, मालाकारस्य गमनानन्तरं तेनैव द्रव्येण साधयिष्यामि नानाकार्याणीति विचिन्त्य सद्योऽनुमतिं प्रादात्। प्रसन्नतया च तदीय यत् किमपि वेतनादिक निःसरति स्म, तत्सकल यथानियम गणितक्रमेण देयमासीत् तन्निःशेष तस्मै दत्वा किञ्चिदधिकमपि पारितोषिकरूपेण प्रदाय सन्तुष्टञ्च त विधाय सहर्षं ससम्मान विससर्ज।

मालाकारः तत सकल वेतन समासाद्य सरसमधुरवचनरचना-पाटवैस्त सन्तोष्य प्रशस्तिभिः स्वकुटीरं समागत्य स्ववस्त्रादीनि सङ्गृह्य-साशङ्क सभय वणिक्पुत्रद्वारा चौर्यकर्मणा क्वचन न नीतं स्यात् तद्रक्षित तद्धनमिति साशङ्क सकम्प शनैः शनैः चलदलतरुकोटरसमीपमागत्य स्खलितगत्या वार्धक्यादप्यसमर्थो वृक्षारोहणकर्मणि किन्तु कथञ्चन साहस विधाय वेपथुमद्गात्रः तस्मात्कोटरात् भगवदनुग्रहबलभृत् सः यथावस्थिता रक्षिता स्वकीयधनपोट्टलिका प्राप्य भृशं मोदमानं शत-शत-वार भगवन्त प्रणम्य तदनुग्रहाल्लब्धामेव मत्वा निजसत्कर्मोपार्जितं पारिश्रमिकमय श्रमसाध्य समासाद्य सद्य एव स्वग्राम प्रति प्रस्थाय स्वगृह-मागत्य यथास्थान तत्सकल द्रव्य सुरक्षित विधाय स्वगृहे सकलबन्धु-बान्धवै सह सानन्द निवसति स्म।

गते च तस्मिन् मालाकारे स वणिक्सुतः सत्वर पितु समीपमागत्य तद्धनपोट्टलिकाविषये स्वजनक पृष्टवान्। क्व सा रक्षिता तदीया धनभस्त्रिका ? अस्ति सुरक्षिता ? गत स तु वराको मालाकारः। न जाने का स्थितिर्जाता तस्य दीनस्य, यावज्जीवन सम्पादित सर्वस्वमित्थ परिहाय गतवतः कीदृशी दशा सञ्जातेति। रोदिष्यति वा चिन्तामग्न· ? पूज्यचरणाः! पश्यन्तु सुरक्षिता निर्भय निष्काशयन्तु, यथेच्छञ्च व्यवहरन्तु।

श्रेष्ठी —वत्स ! मा चिन्ता कुरु, अहन्तु ता तथा सुगुप्ता सुरक्षिता वा रक्षितवान् यत्र कोऽपि धूर्ताद् धूर्तोऽपि चौरादीना तु का कथा तेषा पूर्वजा अपि शोचयितुमपि शक्नुवन्ति। न कोऽपि जानाति तद्रहस्यमिति। वत्स! जानासि त्वम् अस्मदुद्याने प्राचीनतम· सोऽश्वत्थवृक्षः, तस्यैव गह्वरे कोटरेऽह निक्षिप्तवान् यत्र नास्ति देवानामपि गति· कुतो मनुजस्य।

पुत्रः—हन्त! तातपादाः अनर्थो जातस्तत एव हि साऽऽनीतासीत् अहो प्रबलतम मालाकारस्य भाग्यम्। भगवतोऽनुग्रह। सत्यमेतत्

"यदस्मदीय न हि तत्परेषाम्"



# अहो पञ्च-न्यायः

बहो· कालात् प्राक् "ताप्ती" नाम्न्या नद्यास्तटे स्वल्प एको ग्राम आसीत्। तत्र "वत्सल" नामा कश्चिद्वणिग्वरो व्यापारकर्ता निवसति स्म। प्रत्यक्षदर्शनेन तु न सः तादृशो विशिष्टो व्यापारकुशलः प्रतीयते स्म, किन्तु सहस्रावधि द्रव्य सुवर्णमुद्रादिक सङ्कलितवान्।

अथैकदा स एव वत्सलः कमपि विशिष्टतम व्यापार चिकीर्षुः देशान्तर गन्तुमुद्यतः स्वमनस्यचिन्तयद् यद् विद्यते मत्सविधे सहस्राऽधिका हिरण्यमुद्रा, क्व कस्य वा सविधे सुरक्षणीया एता., याः प्रत्यावर्त्य यथावस्थिताः ससुख लभेयेति निश्चित्य सकलास्ताः सुवर्णमुद्रा एकस्मिन् पात्रे सस्थाप्य, तदुपरि च मधुपक्वैरामलकैर्मधुसयुक्तैस्त भाण्ड सम्पूर्य तन्मुख वस्त्रेण सवेष्ट्य तदादाय च स्वपार्श्ववर्तिनो वातापिनाम्नः कस्यचन वणिजो गृह गत्वा प्रावोचत् :-

वत्सलः—भो· भोः वातापिन् श्रेष्ठिवर्य! ह्यः प्रभात एवाऽह विदेशं जिगमिषुरस्मि। ततः पञ्चष-मासानन्तर पुनरागमिष्यामीति। तावदत्र भवतो गृहैकदेशे भाण्डमिद सस्थापयितु कामये यद्यस्ति यदि भवेत् तवाऽनुमतिः ?

वातापी—तद्वचन सादर स्वीचकार।

वत्सलः—स्वय स्वहस्तेनैव स्वकीय स्वर्णमुद्रामय (सहस्रसुवर्णमुद्रा-सम्भृतम् तद्भाण्ड, मधुपक्वाऽऽमलकै मधुना च सम्भृतम् तत्रैकदेशे सुरक्षित सस्थाप्य निश्चिन्तः सन् विदेश गतवान्।

विदेशे च यथाऽनुमानित तेन, ततोऽप्यधिकतर धनराशिञ्च सः स्वव्यापारेण समुपार्जितवान्। पुनश्च सः लाभाधिक्यलालसया तत्रैव व्यापार कुर्वन्नेव पञ्चषवर्षावधिकः कालस्तत्रैव यापितः। स च पञ्चषण्मासानन्तरमेव प्रत्यावर्तनप्रतिज्ञानुसार नैव प्रत्यावर्तितः स तु षट्सवत्सरानन्तरं पुनरायातः।

अत तदन्तराले समय एव स श्रेष्ठी यस्य गृहे वत्सलो रक्षितवान् स्वकीय धनकलशम्। बहुसमये सञ्जाते विस्मृतवान् स श्रेष्ठी वत्सलर-क्षितमिद भाण्डमिति। अत स एकदा दीपमालिकोत्सवावसरे समस्त-मार्जन-स्वच्छीकरण - नवीनसुधासलिप्तीकरण - रङ्गरञ्जितीकरणादि-क्रियाकलापकलने सर्वविधभाण्डादीना पात्राणामपि मञ्जन-रञ्जनादौ तदपि भाण्ड (यद्वत्सलेन स्वर्णमुद्रासम्भृत मधुपक्वाऽमलकमधु-परिपूरितं स्वहस्तेन सरक्षितमासीत्) तद्भाण्डागारमपि स्वच्छीचकार।

स्वच्छीकरणावसरे विस्मृत-वत्सलवृत्तान्त स श्रेष्ठी तदेव पात्रं विलोक्य चिन्तयामास-यत् कीदृशमिदम् केन रक्षित कुत आनीत किमु सम्भृतमस्मिन् कस्याऽय व्यापार कथमिदं तावद्भारवत्, किमस्त्यस्मि-न्नित्यनेकधा वितर्कयन् कौतुकाविष्ट. स, भाण्डमिदमादाय वस्त्रावृतञ्च तद् दृष्ट्वा द्विगुणितितरकौतुक समुद्घाटच यावद्विलोकयति तावदामलकफलानि मधुपक्वानि वीक्ष्य वत्सल स्मरति। स्मृत्वाऽपि लोभाविष्टचित्त पर्य्याप्तधनलाभप्रहृष्टचेताः शोचयति स्म - न जाने स प्रत्यावर्तिष्यतेऽपि न वा! सम्प्रति सप्तसंवत्सरात्मक कालो व्यतीतो नाधुनावधि समागतः, न वा तस्य समाचाराण्यपि, न जाने स जीवति

न वा ? इति चिन्तयन् शोचति च स, किमस्मिन्नामलकफलान्येव सन्त्याहो किञ्चिदन्यदपि ।

इति विचिन्त्य सद्यस्तद्भाण्डमधोमुख व्यदधात् । तत्क्षण एव शुष्काऽमलकफलै सह सहस्रावधिसुवर्णमुद्रा अपि नि सृता । विस्फारितनयनाभ्या हर्षोल्लासविकसिताननस्ता सुवर्णमुद्रा सहस्रमिता विलोक्य सहसैव लोभाऽभिभूतमानस सपदि सङ्कलय्य सर्वास्ता स्वकोषे संरक्षन् - सकलास्ता पाचयितु नानाकल्पनामकार्षीत् ।

तथा हि-न कोऽप्यासा साक्षी यदेता स्वर्णमुद्रा मत्सन्निधे वत्सलो बिना केनाऽपि लेखेन प्रमाणेन वा सरक्षेत् । कथमिद सम्भवम् ? यदि च स जीवेत्, समागच्छेद्, याचेत वा तर्हि स्पष्ट कथयिष्यामि न हि बन्धो ! न त्वया कदाचन मत्सम्मुखे गणयित्वा दर्शयित्वा वा रक्षिता तर्हि कथमह जानीयाम्, कथयेय वा, कियती आसीदिति, आसीन्न वेत्यपि नाह किमपि जाने । भवान् केवल भाण्डमिति कथयित्वा रक्षितवान् स्वयम्, स्वयमेव हि गृहीतवाश्चेति भवानेव जानातु । मया तु ज्ञातम्-यदस्मिन् केवलान्यामलकफलान्येव सन्ति, यथा त्वयैव तु भाण्डसरक्षणावसरे भणितमपि यथैव रक्षित तथैव त्वयोत्थापितमपि । कथमह कथयेयम् ?

इत्थ प्रवञ्चक स वातापी लोभाभिभूत तदेव भाण्ड नवीनैरेवामलकैर्मधुना सह सपृक्तै सम्भृत्य दीनाराश्च स्वकोषे सस्थाप्य तद्भाण्डं तथैव यथापूर्वं भाण्डागारे सरक्ष्य यथावत् त कीलितवान् ।

यातेषु च कतिषुचिद् दिनेषु स. वत्सल समागत. । स च तत्राऽऽगत्य स्वभाण्ड गृहीतु प्रोवाच । सोऽपि त भाण्डागार समुद्घाटच तथैव सुरक्षित तत्पात्र तस्मै दर्शयामास । स च वत्सल. ततस्तदेव भाण्डमादाय स्वगृहे गत्वा, तत्समुद्घाटच, पश्यति, तदा सर्वं नवीनमेव प्रतीयते स्म । आमलकफलान्यपि नवीनानि, स्वर्णमुद्राणामभावश्च । स च सम्यगनेकवार विलोक्य व्याकुल सन् विक्षिप्त इव धावन् शीघ्रमेव

वातापिन सविधे गत्वा, शोक-क्रोध-दैन्यविस्मयान्विष्टो विवेकशून्य इव तमपृच्छत् ।

वत्सल —महामहिम ! धर्मनिष्ठ ! सत्यव्रत ! सत्य ब्रूहि क्व गता मे त्वद्भवने सरक्षणाशया निहिता मया सुवर्णमुद्रा ? कुत्र नीताः तद्भाण्डन्तु केवलमामलकफलैरेव सम्भृतमस्तीति पश्य——

मया तु भवतः पूर्णसम्पन्नस्य विश्वास' कृत, किन्तु भवास्तु मामेव प्रवञ्चयति नैतत् त्वदुपयुक्त कर्म। न वैतादृशो व्यवहार एव श्लाघ्यः। कृपया प्रदीयता मामकीना' सुवर्णमुद्रा । न त्वया लुण्ठाकेन भाव्यम् ।

वातापी :——प्रिय ! वत्सल ! किमित्थ त्व प्रलपसि ? किमेवमेव मा लुण्टाक चौर वा कल्पयितुमेव स्वभाण्ड रक्षितवान् ? सरक्षणस्य किमेतदेव प्रायश्चित्तम् ? एतदर्थमेत्रात्र निहितवान् भवान् ? बन्धो ! यथा रक्षित तथैव त्व गृहीत्वा, स्वगृह नीतवान्। तत्रैव त्वया किं कृतं, कि जातमिति तु त्वमेव जानीहि। किमह ब्रूयाम्। इति। किञ्च–आमलकभाण्डे को नाम बुद्धिमान् दीनारान् रक्षिष्यति ? क-स्तत्राऽऽमलकेषु दीनाराण सम्बन्ध'। किमेतद्विश्वसनीयम् ? ततस्तौ परस्पर विवदन्तौ कलहायमानौ न्यायालयमगच्छताम्। विवादमुभयो-र्भद्रपुरुषयोराकर्ण्य साश्चर्यं नागरिका अपि शतशः समेता अभूवन् न्यायालयद्वारि ।

वत्सल स्वविषय सर्वं यथावस्थित कथ्यमेव न्यवेदयत्। आमूल-चूड सर्वं वर्णितवान् न्यायाधीश [पञ्चायतनप्रधान] सम्मुखे ।

निर्णायकाः—सर्वे श्रुत्वैव - वातापिनमुद्दिश्यापृच्छन्–किं भोः किमेतदाचरित भवता समृद्धिशालिना श्रेष्ठिताऽपि ? किं कथयति वत्सलः ?

वातापीः—महानुभावा ! नाहं जाने किमपि न मया क्वचन स्पृष्टमपि तद् भाण्डम् न तस्मिन् विलोकिता स्वर्णमुद्राः, न वाऽऽमलक-फलानि वा। यथैवानेन रक्षित निहित तथैव च प्रातः नीतमपि। नाहं जाने किमस्त्यत्र रहस्यमिति। व्यर्थमेव मा कलुषीकरोत्ययमिति।

निर्णायकाः पञ्चजनाः—किं भो वत्सल ! त्वमस्य गृहे दीनारान् रक्षितवानित्यत्र किमस्ति कश्चन साक्षीति, प्रतिभूलेखो वाऽपि।

वत्सलः—उभयोरन्तरात्मानमन्तरा नान्य कश्चन साक्षी ना-लेखोऽपि।

पञ्चायतनाध्यक्षः—तर्हि त्वया सहस्रस्वर्णमुद्रा रक्षिताः इत्यत्राऽपि को नाम विश्वसिष्यति। अस्तु रक्षिताः नीता वा गृहे सम्यग् दृष्टा अपि न वा, क्वचन भाण्डैकदेश एव ससक्ता भवेयुः। पुनर्विलोकयतु।

वत्सलः—( ससम्भ्रम ) भगवन् ! सम्यगेवानेकवार दृष्टम्। न तास्तत्रेति।

पञ्च० अध्यक्षः—तर्हि गच्छ शीघ्रं, तत्पात्रमेवात्राऽऽनीयताम्। दर्शयाऽस्मान् येन शङ्कापगमो भवेत्। स्फीतीकरणञ्च विषयस्येति।

वत्सलः—निराशामहासागरे लोलकल्लोलाऽऽहतः सवृत्त। विश्वा-सोऽपि नैराश्यमहापङ्के निमग्नोऽभवत्। तथापि स गृह गत्वा तद्भाण्ड-मानीय न्यायालये समेषा समक्षे यथावस्थित रक्षितवान्। सद्योऽधोमुखी-कृत्य सामलकमेव प्रदर्शितवान्।

पञ्चा० अध्यक्षः—वत्सलकथनमनाकर्ण्यैव त्रिचत्वारि तदामलक-फलान्यादाय भक्षयन्नेव प्रोवाच—आम् विदित सर्वं रहस्यम्। सर्वान् सम्बोध्य भवन्तोऽपि फलानि भक्षयन्त्वास्वादयन्तु च कीदृशानि सन्ति स्वादूनि। सर्वे च तत्फलान्यास्वाद्य सद्यः प्रोचुर्नैतानि सप्तवर्षेभ्यः पूर्वतनानि। एतानि तु सुस्वादूनि नूतनान्येव प्रतिभान्ति यथाऽस्मद्गृह-

स्थितान्याधुनिकानि सन्ति नैतेषु तेषु चाऽऽस्वादभेदः। प्राचीनान्यपि सन्ति न तानि तथा स्वादूनि, यथैतानि सन्ति।

पञ्चायतनाध्यक्षः—किं भोः वत्सल! त्वन्तु सप्तवर्षेभ्यः पूर्वं रक्षितवान् एतानि त्वामलकफलानि तु नवीनतमान्येव सद्योजातानि प्रतिभान्ति।

सर्वे निर्णायका —सत्यमेवैतत् नैतानि सप्तवर्ष-पूर्वतनानि, सद्यस्त्रोटितानि मधुसम्पृक्तानि विधाय रक्षितान्येवैतानि। समेषामीदृशं निर्णयं श्रुत्वा सद्य एव वातापिमुखमतीव मलिनमभूत् सर्वत्रश्यामिका वातापि-वदने स्वत एव प्रास्तृताऽभवत्।

सर्वे निर्णा०'—वातापिममुद्दिश्य - कि भोः त्वन्तु पात्रमेव न स्पृष्टवान्, तर्हि पात्र कथ नवीनैः फलैः स्वत सम्भूतमभूदिति किमत्र रहस्यम्। यद्यमीषा फलाना स्वत सम्भूतिश्चेत्, तर्हि-अस्मिन्निव नवीनफलोद्भूतिरन्यस्मिन्नपि पात्रान्तरे भाव्या? सत्य वद, कोऽत्र भेदः किं रहस्यम्। वस्तुस्थितिस्तु स्पष्टैव जाता। न्यायालयोऽन्यथा भवन्तं कारागारदर्शन कारयितु निर्णीते (निश्चिनोति)

वातापी·—स्वकृतापराध स्वीकरोति क्षमा याचमानश्च वत्सलं स्वगृह नीत्वा समर्पयति सकलास्ताः स्वर्णमुद्राः।

पञ्च-अध्यक्षः—वत्सल! गच्छानेन सह तद्गृह, गृहाण च स्वकीयाः स्वर्णमुद्राः।

वत्सलः—कोटिकोटिधन्यवादान् वितीर्य-घोषयति अहो धन्यः खलु पञ्चायतनाध्यक्षस्य न्यायः। इति।



# यत्पूर्वं विधिना ललाटलिखितं तन्मार्जितुं कः क्षमः

एकदा महाराजस्योग्रसेनस्यैका कन्यकाऽऽसीत् । तस्य नाम—माधवीति लोकप्रिय व्यवहार्यमासीत् । सा ह्यपूर्वसुन्दरी गुणवती ब्रह्मणोऽदभुता नारीसृष्टिरेव सञ्जाता । यदा च सा विवाहयोग्या सञ्जाता नवयौवना रमणी, तदा तस्य पिता तद्विवाहार्थमतीव चिन्ताऽऽतुरोऽभवत् । विशेषतश्च तस्याः सौन्दर्याऽतिरेकमालोक्य तदनुरूपः पति कुत्र कथ वाऽन्वेष्टव्य इति । व्यचिन्तयच्चास्या सम्बन्ध तथाविधेनैव वरेण सह कल्पयिष्यामि योहि सर्वात्मना तदनुरूपो भवेद् यथा तस्य कन्यकाऽऽसीदिति ।

तदर्थं महाराजो नानादेशवास्तव्यान् राजकुमारान् दिग्दिगन्ततोऽप्यानाय्य विलोकयामास किन्तु न तेषु कोऽपि तथाविधो माधव्याः सौन्दर्याऽनुरूपः समुपयुक्तो निर्वाचितः । हताशः सन् सकलमन्त्रिणः समाहूय विचारविमर्शं कृतवान् । तेषु मन्त्रिषु च प्रधानमन्त्री सुबुद्धिनामा महाराजमपृच्छत्—

सुबुद्धिः ( मन्त्री )—स्वामिन् किमु राजकुमार्या वरोऽपि राजकुमार एव भवितव्यः किमुत कोऽपि सम्भावितकुलोत्पन्नः सुयोग्यः सुन्दरः सुशीलोऽपि ?

महाराजः—मन्त्रिन्! कोऽपि सुयोग्यः सम्भावितोऽभिजनानन्दनः सुस्वरूप. सत्वरमन्वेष्टव्य. सर्वथोपयुक्तश्चेति।

तत स प्रधानाऽमात्यः ततः प्रभृत्येव राजकुमार्याः कृते वरान्वेषण-कर्मणि सलग्न' सञ्जातः। सर्वत्राऽन्वेषणमारब्धम्। अनेकत्र शतशो राजकुमारा योग्यतमा नवयुवकाः दृष्टाः पर न राजकुमार्याः स्वरूपानु-रूपः कोऽपि चाक्षुषविषयोऽभूत्। इत्थ राज्ञश्चिन्ता प्रतिपल प्रवर्धते स्म। एकदा रात्रौ चिन्ता कुर्वन्नेव महाराजो रात्रौ स्वपन्नर्द्धविनिद्रः सन् विचित्रतम स्वप्नमिवाऽनुभवति स्म, यत् साक्षाद् विधाता समुप-स्थाय महाराज सम्बोध्य प्रावोचत्—अरे राजन्! किमर्थं व्यर्थ विचिन्तयसि! मया तु पुरैव राजकुमार्याः जन्मकालसमकालमेव सुयोग्योऽस्या वर' परिकल्पितो विशिष्टः शिष्टश्चेति। तेनैव सह—भविष्यत्यस्याः ग्रन्थिबन्धनमिति पुरैव निबद्धा ग्रन्थिरविस्खलितेति।

राजा—( स्वप्ने एव कस्तर्हि भगवन्! सः, किन्नामधेयश्चेति कृपया निदर्शय!

ब्रह्मा:—राजन् सः "कुरूरवटः" इति नामाऽस्ति। इत्युक्त्वा विधि-स्तिरोहितोऽभूत्। सहसा सुप्तोत्थितो महाराज. सुभगस्वापवृत्तान्त श्रावयितु मन्त्रिणः समाहूय स्वप्नवृत्त तु श्रावितवान् किन्तु वरनाम विस्मृतत्वान्नोक्तवान्। विना नामज्ञान कथमन्वेषणमपि स्यात्—इति चिन्ताव्यग्रो न लब्धवान् रात्रावपि निद्रासुखम्। सन्तत चिन्तासन्तान वितानोत्तानितमानस. यदा निद्रामवाप्तवान् तदा पुन. स एव विधि समागत्य त बोधितवान्—अरे रे! कथ विस्मरसि, तस्य नामास्ति—"कुरूरवटः" इति।

सम्प्रति विचित्रतम नाम न विस्मृतवान् महाराजः। प्रातः समुत्थाय सर्वान् समाहूय विशेषतश्च प्रधानामात्य सुबुद्धिनामान, प्रोवाचः—

राजा—महामन्त्रिन्! पुनरद्य स एव देवदेवः समागत्य जगाद माम्, तस्य मे भाविनो जामातुर्नाम 'कुरूरवट." इति निर्दर्शितम्।

स्वप्नेऽर्द्धजागरितावस्थायामेव स्वय लोकविधात्रा विधात्रा प्रोक्तम् तत्कथमन्यथा भविष्यतीति, सन्ति किमु ससारे तादृशविचित्रनामानोऽपि जनाः ? न जानीमो वय क्व निवसन्ति कस्मिन् भूभागे विद्यन्ते वेति । तादृशानामपि महामहाभागधेयाना भविष्यति कथङ्कार वाऽत्र समागमः । कथञ्च सम्पन्नतामेष्यति राजकुमार्य्या सह सम्बन्धः ?

मन्त्री – महाराज ! दुरन्तपारे सुविस्तारेऽस्मिन् धरणिमण्डले बहवो विहरन्ति विचित्र-विचित्रतमनामानो महात्मानः । न तेषा तथाविध नाम न कैश्चन श्रुत न वाऽऽलोकितम् । भूयासश्चैतादृशा अपि मिलिष्यन्ति ये हि तन्नामधारिणो भूत्वा राजकुमार्या सहैव पाणिग्रहण स्वात्मनः कारयितुमुद्युक्ता भवेयुः । अतः स्वप्ने ब्रह्मणा यन्नाम निर्दिष्ट न तत् कस्याऽप्यग्रे प्रकटनीयमेव । नितान्त गुप्त सरक्ष्यैव तदन्वेषणे विधातव्यो यत्नः ।

इति राजान सम्बोध्य सः स्वकीयान् विशिष्टगुप्तचरव्यापारे निष्णातान् कार्यकरान् तदर्थ सद्यो नियोजयामास । प्रोक्तवाश्च तान् समस्ते भूमण्डले परिभ्रमन्तो भवन्तो विचित्रनाम्ना विवाहितानामविवाहिताना पुरुषाणा नामानि निवासस्थानानि स्वभावप्रकृतिप्रतिकृति-जाति-कुल-परिवार-गोत्रादीनि सर्वाण्युल्लिख्यानयन्तु प्रदर्शयन्तु—च महाराजस्याभिमुखम् । सद्यः स्वस्वव्यापारे व्यापृता भवन्तु । इति ।

इत्थ लब्धाऽऽदेशास्ते चारा समन्ततो भूमौ परिबभ्रमु । सर्वे च ते विचित्रनाम्ना पुरुषाणा सर्वविधं निर्दिष्ट नामादिक सङ्केतादीनि समुल्लिख्य निवेदयामासु । तेष्वेकश्चारः "कुक्कुरवट" इति नाम विलिख्य निवेदयति स्म । तच्छ्रुत्वा स चकितः सोल्लसित सोत्प्रासो वार वारमेव तन्नाम शृणुते पृच्छति चोद्वीक्षते च सविस्मयम् ।

मन्त्री—ससम्भ्रम–कोऽय कुतस्त्योऽय किंज्ञातेयश्चेति तमपृच्छत् ।

चारः—भगवन् ! स तु वनेचरबालको नवयुवकः । अस्मन्नगरात् पूर्वदिशि स्थिते, विचित्रविधिविधाननाम्नि कानने निवसति—तत्रैव मया दृष्टः स ।

मन्त्री—सत्वर राजानमुपस्थाय सर्वं निवेदयामास । इत्थमित्थमिति ।

राजा—प्रथम भवान् स्वयमेव गत्वा दृष्ट्वा चानयतु ।

मन्त्री · यदाज्ञापयतु देव. । इत्युक्त्वा प्रस्थितः पुनर्दिनत्रयाऽभ्यन्तर एव स सुबुद्धिनाममन्त्री तत्र गत्वा तमालोक्य सर्व नामादिक विज्ञाय "कुरूरवट" एवायमिति निश्चित्य स्वात्मना सहैव त स्वनगर समानैषीत् किन्तु सः बालकोऽतीव दुर्बलशरीरी निरग्निकाङ्गारवर्णसवर्णः श्यामोऽतिगभीरविरूपाक्षो विरूपाक्षानुग इव विकरालवेषः करालकेशो ह्यशेषवन्यैः सहाऽसत्प्रदेशविशेषप्रियो विहितवनेचरचर्यो गर्ह्य एवाऽऽसीत् ।

"निरग्निकाङ्गारसवर्णवर्णः श्यामोऽतिगम्भीर-विरूपनेत्रः ।
करालकेशो विकरालवेषो ह्यशेषवन्यैः सह सत्प्रदेशः । १ ॥

महाराजस्तु तमनालोक्यैव-किं भोः मन्त्रिवर्य । भवता तु प्रतिज्ञात, यदह स्वात्मना सहैवानेष्यामि वर, परञ्चैकाकी कथमागत. ? कि जात, कथ रुद्धवाक् ? कि न तस्य तन्नाम, किमुताऽन्यत् ?

मन्त्री—महाराज ? कि निवेदयामि, मम मुखात्तु शब्दोऽपिन निःसरति । यद्विषये वय चिन्तयन्तो मनोरथात् व्यकल्पयाम, स एवाऽय बालो यो हि ब्रह्मणा परिकल्पितो राजकुमारीवरः । अयमेव-जामाता भविता, यदि विधिना सत्यमेव भणितम् अस्यैव नाम "कुरूरवटः" इत्युत्वा त बालक सपदि राज्ञः सम्मुखे समुपास्थापयत् । महाराजस्तु त दृष्ट्वैव सद्यो रक्तनयनः पीतवदनो निपीतवारुणीक इवाकारुणिकः सन् क्रोधाग्निज्वालामालाऽऽवृतसर्वाङ्गः समुन्मत्त इव न व्यधत्त किमपि वृत्तं स्वचेतसि सद्यः प्रदत्तवानाज्ञामज्ञानजृम्भिताम् ।

महाराजः—हन्त ! अयमेवाऽय स. ? किमर्थमेत मत्सम्मुखे सभानीतवान् ? सत्वरमितो दूर नीत्वा सद्य सप्राण हन्तव्योऽयम्। येन न पुनः क्वचन मन्नयनपथमुपेयात्। कथ विधात्रा लिखितोऽय वनेचरोऽतिकृष्णकायो विमायो राजकुमार्या वरो भविता च मे जामाता ? हन्त विधेर्बुद्धिभ्रम. ? यो ह्यभयोर्वैवाहिक सम्बन्ध स्थिरीचकार, हन्त तस्यापि मतिविकारः। महामन्त्रिन् !—सद्य एवेतो दूर वने नीत्वैन प्राणघात जहि । इति। इत्थ राज्ञा समाज्ञप्तो महामन्त्री त बालक स्वात्मना सहैव वन नीत्वा निरपराध मुग्ध त हन्तु तु तस्याऽपि मनो भृश विव्यथे, दुदूये च। तथाहि—

"आज्ञप्तोऽपि शुचि वनेचरशिशु मुग्ध विनिष्कल्मष,
प्रेम्णाऽऽनीतमथाऽनुकूलचरित स्वाज्ञानुसारिव्रतम्।
शान्त दान्तमतोऽनभिज्ञहृदय राज्ञा क्षणोन्मादिना
विश्वासोपगमाऽऽगत कथमह हन्या ? मनो विव्यथे ॥ २ ॥

पुनरपि स व्यचिन्तयद्—यद् दृष्ट्वैन राज्ञः क्रोधकरणमपि समुचित एव, यतो हि को नाम महाराज सन् परमसुन्दरी स्वसौन्दर्योल्लासविलज्जितामरेन्द्रवधू लोकोत्तरलावण्या रमामिव राजप्रासादे राजमानामपीदृशाय कुरूपाय विकटाक्षाय कृष्णायससदृक्षवर्णाय महतेऽभद्रस्वरूपाय प्रदातु कामयिष्यते। यो हि स्वसमानमानसम्पत् सम्पन्नान् नानाविधसौन्दर्यविलासहासविकासितवैभवान् महामहिमशालिनो राजकुमारानपि न तस्याः कृते वरोपयुक्तानमन्यत, स एव कुरूप विड्रूप विरूपाक्षमित्थ वनेचर दुर्बलातिकृशगात्रमपात्रमपि स्वराजकुमार्याः कृते वर विधातु स्वीकरिष्यति किमु ? सत्यमेव—

"सौन्दर्य्याद्यतिशायिनी निजसुता लावण्यलोकोत्तरा
मृद्वङ्गीमपरा रमा गुणगणप्रख्या विधातुः कृतिम्।
कृष्णाङ्गारसदृक्षवर्ण - विकटप्रेक्षेक्षणायाऽनिश
ह्रस्वाङ्गाय वनेचराय हि कथ कन्या प्रयच्छेन्नृप ॥ ३ ॥

तदनन्तरञ्च सुबुद्धिरेव यथार्थनामा सुबुद्धिरासीत्। हृदये दयाया इव प्रवहति स्म तस्य। कुरूवटस्य निरपराधस्यैव विषये चिन्तय भृश व्यथितोऽभूत्। यदह कथ त सर्वात्मना विश्वस्त विधायैव स्वात सहाऽऽनीतवान्। नानेन च किमप्यपराद्धम्, तर्हि निरपराधमेव, मह नितान्तमुग्ध सम्प्रति मामेव स्वात्मीय जन मन्यमान विश्वास मव कृत्वा व्यर्थमेन हन्यामिति महानधर्मो भविता। किम्बहुना शि वातिमुग्धबुद्धिर्नैतदपि जानाति यन्मामत्र मारणायैवानीतवान्, अ स्वदरण्यनिरीक्षणायेति।

महाराजेनापि केवल कुरूपो वनेचरबालक इति कृत्वैव विधाऽऽज्ञा प्रदत्ता नान्यथाऽनेन मह कश्चन विरोधः प्राक्तनो वा वैर ईदृश. कुरूपो न भवेन्मे जामातेति तथाऽऽज्ञा प्रदत्ता।

किञ्च नितान्त विमुग्धचेष्टोऽय यतः प्रभृति वन सत्यज्य सहाऽत्र नगरे समानीत तत एव भ्रान्त इव, समुन्मत्त इव अवि सकलविषयोऽय केवल मत्कथनाऽनुसारमेवाऽऽचरति, तथैव चेष्टते च।

यदि चाऽय पुनरप्यत्राऽऽनीत, तदाऽस्य हृदि समभवत् पुनः प्राण सञ्चार इवेति।

स हि पुनरेव यथापूर्व वन पुनर्लब्धवान् तत प्रभृति सुखिन इव लोक्यते हसत्यपि जल्पति मोदते-पृच्छति कथयत्यपि।

सद्यः फलभारावनतान् पादपान् विलोक्य प्रफुल्लितवदन स तानारुह्य सुपक्वानि सुभगमधुराणि फलानि त्रोटयित्वा आन वृक्षारूढश्च शाखामृगायितः सन् स्वयमपि भक्षति। मह्यमपि मधुर सरसान्यादाय प्रयच्छति। क्रीतदास इवाऽऽचेष्टते चाऽयमिति विचि तद्धृदये दयायास्तीव्रतरः प्रसार प्रवाह इव निरसरत्। कारुण्यार्द्रह स सुबुद्धि स्वबुद्ध्यैव समुपायमचिन्तयत्। यद्धि नाहं स्वहस्तेन हन्तु कामये न हननमेवाह साक्षाद् द्रष्टुमपि शक्नोमि, किन्तु राज

ज्ञाऽपि नोल्लङ्घनीया, स्वामिभक्तिव्याघातजन्य दुरितमपि यथा मा न स्पृशेत तथैव करणीयम् । तादृशएवोपायो विचिन्तनीयः ।

विचारेण सद्यैव तथाविधोपायोऽपि ज्ञानविषयीभूतोऽभूत् । यथा स्ववदनमुनमय्य सम्मुखमालोकते तदा वासुकीनामा गिरिराजो दृष्टिपथमुपगतो जातः । तस्मिन्नेव गिरिवरेऽतीवरम्य मनोमोहकञ्चास्ति सरोवर' । तस्मिन् न कश्चन प्रविशति न वा स्पृशति तदीय शीतल मधुर-मपि तोयम्, किं पुनः पानस्य कथनम् । यतो हि तस्मिन् वासुकी नामा नागराजः अष्टकुलीननागानामधिपतिर्महाविषोऽनेकफणाऽलङ्कृत प्रति-वसति । अतएव तन्नामाऽभिध तत्सरः । अतएव सर्पराजस्य श्वासोच्छ्-वासै महामहाविषप्रसरैः समस्तसरसो जलमत्युल्वणविषाक्त विद्यते यदस्य गन्धेनैव खगा अपि सद्योमृता निपतन्ति यदि दुर्दैवात् तदुपरि समुड्डीयन्ते । यदि वा दुर्दैवहतो भ्रान्त्याऽपि तज्जल पिबति सद्य प्राणैर्वियुज्यते । स्पृशतोऽपि जनस्य स्पर्शसमकाल एव हस्ते विषविस्फोट प्रकटितो भवति । यदि चाज्ञानात् विस्मृत्यापि स्नातु तस्मिन् प्रविशति तर्हि त दुर्दैवहतक तस्यैव पारिपार्श्वका सद्यस्त गृहीत्वा सर्पसमीप नयन्ति । अर्थात् सः सद्यो निमज्जति नोत्तरति वा जीवितस्तु । नानाविधा' नैकशिरस आशीविषा परितस्त परिवृत्य विषदिग्ध, दग्ध वा कुर्वते ।

किन्तु तत्रत्याः सरसोऽभ्यन्तरे वर्तमाना नानाविधा नैकमस्तकाना फलासु विद्यमाना महामहाप्रभापटलपरिराजिताखिलप्रदेशाः सविशेषा रोचिष्णवः सहस्रशो निपातिता अपि रत्नमयबालुकास्तरणाधिश्र-यणसौख्यमिवानुभवन्तो विलसन्ति महामणय । यो हि सौभाग्यात् तत्र जलाशय गाहमानोऽपि जीवितो निःसरेत् स विविधरत्नराजि-सङ्कुलनशोभितमहामणिको मणिमयाऽऽभरणभ्रगजिष्णुर्भाग्यवान् परमालौ-किकसम्पत्तिशाली सन् मोदते, मन्त्रीमण्डले महीमहीपाधीशसमर्चितपाद-पीठश्च भवेदिति ।

इति मनसि विचिन्त्य सः सुबुद्धिनामा दयालुर्मन्त्री तं बालकं "कुरूरवटं" सम्बोध्य बभाषे—

मन्त्री—वत्स ! "कुरूरवट" अस्ति मे सम्प्रति त्वत्तः किमपि कार्यम् तद् भवता कर्तव्यमेव। पश्य सम्मुखे सुदूरतरं गिरिराजो दृश्यते तत्र त्वया गन्तव्यम्। विद्यते तत्रैकं सुविशालं विलसिततमालतालम्, मञ्जुलरसालम्, महाकाल - मन्दिरसनाथं विकरालव्यालसमाश्रित-कीलालम् स्वच्छसुन्दरगभीरनीरम् सततधीरसमीरसमान्दोलितपङ्कज-परागपटलसुरभितसलिलं ललितमपूर्वं महत्सरः। तस्मिन् प्रविश्य तत्रत्या बालुकाः लघुलघुतारप्रस्तरखण्डानि च शङ्खशुक्तयो मौक्तिका-दयो वा दृश्येरन् सर्वाणि सङ्गृह्य यावन्त्यानेतुं शक्येरन् तावन्त्य-धिकाऽधिकान्यानेतव्यानि। पुनस्तान्यादाय मत्सन्निधे त्वया सत्वर-मागन्तव्यमेव। ततस्त्वदर्थमहं भूरिभूरि पुरस्कारं कल्पयित्वा सम्मानं ते विधास्यामि।

बालकः सः कुरूरवटः सन्नद्धः समभवत् तथा कर्तुम्, तमपृच्छच्च किम्भो ! यावदहं सर्वाणि तानि नीत्वा प्रत्यावर्तिष्ये तावदेव भवानपि किमत्रैव स्वस्थितिं कल्पयिष्यतीत्ययवा गमिष्यतीति। यदि गमिष्यति भवान् तर्ह्यहं कुत्राऽऽयास्यामि ? कुत्र वा भवान् मिलिष्यति। कथञ्चाहं त्वत्सान्निध्यं समेष्यामि।

मन्त्री—यस्मिन् नगरे भवान् मया नीतः तत्रैवागन्तव्यम्। तत्राऽऽगत्य च यं कञ्चन प्रक्ष्यति स एव मे भवनं त्वां बोधयिष्यति प्रापयिष्यति वा मदीयं गृहमिति। प्रत्यागते च त्वयि सत्वरमिदमङ्गुलीयकं समुट्टङ्कित-नाम्ना, समङ्कितं ते ददामि। ताञ्च सर्वदा स्वपार्श्वे सावधानतया संरक्षणीयां संरक्षेति। तामेव च तदा यं कमपि दर्शयिष्यति सः सद्य एव मे गृहं स्थापयिष्यतीति। इत्युक्त्वा सः स्वाङ्गुलीतः समवतार्य प्रयच्छति तस्मावात्मीयाङ्गुलीयकम्।

यत्पूर्वं विधिना ललाटलिखितं तन्मार्जितुं कः क्षमः / 

ततो बालोऽपि ता मुद्रिका गृहीत्वा प्रसन्नः सन्, तत्कथनाऽनुसारमेव तदीय कार्यं विधातु तत प्रस्थितोऽभवत् ।

"तत्कथनानुसारमेव त पर्वतराज लक्ष्यीकृतप्रस्थिताय च तस्मै सुवर्णमुद्रामप्येका प्रायच्छन्मन्त्रिप्रवरः ।

बालकोऽपि प्रसन्नचेता वनवासी महता वेगेन समुत्साहेन च वासुकि-पर्वत प्रति प्रस्थित । तावन्त मार्ग पारयितुञ्च दिवसत्रयात्मक समयो यापितः । तदनन्तरञ्च स – सङ्केतित स्थान लब्धवान् । तावत् काल स वन एव रात्रौ वृक्षादेरुपरि-दिवा च वनस्थल्यामेव कथञ्चन दुष्टसत्त्वादिभ्य· स्वात्मन सरक्षन् शाखामृगाणा मृगाणामिव काल नयन् निद्रादिकमपि क्षणिकमेवानुभवन्—विविधविधवन्यसत्त्वेभ्यः सिह – व्याघ्र – व्यालाजगरादिभ्यो निजात्मान गोपायन् कष्टानि सोढवाऽपि स्वकर्तव्ये दृढतर प्रवर्तमानः कदाचित् सङ्कटापन्नामपि स्थितिमनुभवन्नेव स्खलित पतितो झञ्झावातादिसमुत्पातपतितः क्वचिन्महावृष्टि करकापातादिको· पप्लवमपि-सहमानः क्षुधार्दितश्च वन्यफलानि, कन्दमूलानि च समुत्खात्य जक्षन्नेव गिरिनिर्झरवारिधारा पिबन् श्रान्त क्लान्तः नि सरच्छतधार प्रस्वेदपटलमप्यपरिगणयन् स्वलक्ष्य गन्तव्यस्थान वासुकिगिरिराजमासाद्य स्वच्छातिगभीरनीरसम्भृत नानाविध-श्वेत-नील-पीत-रक्त कुमुद-कल्हारकोकनदकुशेशयकमलोल्लसदद्भुतशोभ परित प्रसरत्पुष्पन्धय-धोरणीप्रसारितमधुरगुञ्जनमनोरम नानाविधरत्नोत्पादक रत्नाकरमिवाऽपर प्रसन्नसलिल सलील तरलतमतरङ्गविलसित सरः शोभित प्रैक्षत ।

तदा सरोवरस्यापूर्वां शोभामालोक्य द्विगुणतर समुत्साहः प्रवर्द्धते स्म । स च तत्र क्षण विश्रम्य श्रान्तः क्लान्तस्तृषितश्च सरसोऽम्भसा मुख हस्तौ पादौ च प्रक्षाल्य सुशीतल पद्मपरागपरिमलमनोहर सुरभित

वारि यथेच्छ निपीय परमप्रीतोऽभीत स्वकृतागमनपरिश्रमफलमिव भगवद्दत्त मन्वानो मोदते स्म। पुनश्च प्रचण्डमार्तण्डतीव्रतापसन्तप्त-गात्रस्तस्मि पङ्कजपुञ्जपरागपिञ्जरितसुरभितसुभगेऽस्मिन्नवगाहते स्म शीतलसलिले।

यथेच्छ बहुकालपर्य्यन्त विहरतो जलक्रीडा कलयतस्तस्य समीप तु न वासुकि सर्पराज समागतो न वा कश्चन सर्पाऽऽकारोऽनुचर एव। नि शङ्कञ्च स अन्त सलिले निमज्य पूर्वाऽभ्यस्तप्राणवायुनिरोधा-चरणरसिक प्राणायामक्रम कल्पयन् गभीरेनीरे सरस्तले प्रविश्य तत्रत्या बालुका परित प्रस्फुरितकिरणनिकर विविधरत्नपटल जाज्वल्यमान-ज्योतिष्क शुभ्र-नील-पीत-हरित-रक्त-पद्मवर्णाभ विविधमणिगणञ्च सङ्गृह्य पर्य्याप्तसम्भृतपोट्टलिक स्थूलस्थूल, सूक्ष्मात्सूक्ष्म ज्योतिष्मन्त निभृतरत्ननिचय समुपेत्य जलाद्बहिर्निरसरत्।

स हि होराद्वय यावज्जलविहारे, ससक्तचेता, सम्यक् स्नात्वा सरसो बहिस्तटोपरि समायाति तदा स्वकीय कृष्णायससदृक्ष विहाय ऋक्षाकार, निरग्निकाङ्गारविजयोपहारमिव लब्धाद्भुतदेवगन्धर्वादिसमान दिव्य वर्णमात्मन पश्यति, सुसङ्गठित, सुभग, लावण्यमय, बलिष्ठ द्रढिष्ठ, श्रेष्ठतम, सर्वगात्रम्। वार वारं सरसस्तीरे नातिगभीरे नीरे च प्रति-बिम्बितमात्मन कन्दर्पदर्पदलनदक्ष सकललोकरमणीगणकमनीय कमनीयवपुरालोक्य स्वयमेव विस्मितमानस सरोवरजन्यामेवामन्य-ताऽपूर्वां काञ्चन काञ्चनवर्णदायिनी कामकामामद्भुता सिद्धिम्। समाकर्णितवाश्च बाल्ये लोककथासु तथाविधस्य सरोवरस्य सिद्धिसम्ब-न्धिनी विविधा कथाम्। जानाति स्म च तत्तोयमाहात्म्यम्—यत् सस्पर्शात् पानान्मज्जनाच्च स्वस्थ दिव्य नीरोग बलिष्ठ विशिष्ट वा भवति देवस्त्रीमनोमोहक कमनीय कलेवरमिति। सकृदपि ससेवनान्न भवति क्वचन जरा-पीडित पलितकेशादिकयुत, दिवानिशि श्रमक्लान्त वा मनुजकायम्।

इत्थ स्वकीयपरमसौन्दर्यसम्पन्ना शारीरिकी सम्पद स्वयमेवाक्षिलक्ष्यीकृत्य व्यचिन्तयदहो केवल जलस्यैवैतादृश सरस प्रभावस्तर्हि तदन्तर्गताना समेषामेषा प्रस्तरशकलाना प्रस्फुरितकिरणनिकराणा मणिगणादीना तु न जान कियन्माहात्म्य भवेदिति–निश्चिनुते स्म स्वकीयचेतसि। तदीये वा रेणुपुञ्जेऽपि न जाने कीदृग्विधो गुणो वर्वर्ति, यदर्थ स स्थविरो मन्त्रिप्रवरो वार वार मा प्रेरयति स्म ततस्तत्सकलमानेतु मणिगणादिक वस्तुजातमिति।

पुनश्च स सकलमिद वस्तुजात स्वकीयदुकूलैकप्रान्ते समाहृत्य निबध्नाति स्म। ततस्तत प्रस्थाय पार्श्वस्थस्य गिरिराजस्य कस्मिश्चन शिखरे समारूढ सर्वत स्वदृष्टि प्रसार्य परित प्रसृता तत्रत्या पार्वती सुषमामालोकयामास। पश्यति स्म च सुन्दरमेकमनतिदूरवर्तिन नगरमपि। अशोचच्च सम्प्रति तस्यैव महात्मनो मन्त्रिराजस्य समीपमेव चलितव्यमिति।

'कुरूरवट' इत्थ विचिन्त्य तद्वाञ्छितानि तडागात्स्वात्मनाऽऽहृतानि सर्वाणि रत्नजातानि सङ्गृह्य तत प्रस्थितोऽभवत्। स च न पूर्व क्वचन कदाचन स्वच्छन्दरूपेण नगर दृष्टवान् अत गच्छतस्तस्य सम्मुखे यदेव नगरमभूत् तद् दृष्टिगत, तदेव तस्य मन्त्रिणो नगर विज्ञाय तद्भवननिरीक्षणाय तद्दत्तया मुद्रिकया तन्नामाङ्कितचिह्नभूतया—तदाधारतश्च जनान् तत्रत्यनागरिकान् तदीय भवन पृच्छ नेवेतस्ततो बम्भ्रम्यमाणः कृतभगीरथश्रमोऽपि न तत्र मन्त्रिणः परिचय भवनञ्च लब्धवान्। ततो हताश सन्नग्रेऽग्र प्रसरन् तदीया मुद्रिका दर्शयन् पुनरग्रिम नगरमवाप। घोरतरश्रमे विहितेऽपि नगरनाम्नाऽप्यपरिचितत्वान् न तदन्वेष्टु प्रभुरभवत्।

अन्ते च हताशः क्षुधितो व्याकुलो नवीनाऽपरिचितनगरनिवासाऽऽवासनियमो दिनत्रय यावदन्वेषणतत्पर, क्षुधार्दितश्च स्वोत्तरीयाञ्चलात् तामेव सुवर्णमुद्रा निष्काश्य विपणि गतो धनिना व्यापारिणा समुदाये

गत्वा ता विक्रीय तद्विक्रयणलब्धद्रव्येण भोजनाच्छादनव्यवस्था नागरिकोपमिता विधाय तत्रैव कस्यचन सज्जनगृहे निवसन् शनैः शनैस्तत्रत्यनागरिकव्यवहारेणापि परिचितोऽभवत् ।

क्रमेण च धनिना सम्पर्काद् रत्नादिविज्ञानमपि स समासादितवान् । स्वपोट्टलिकात लघुतमरत्नादारभ्य पारस्परिकाऽऽदान - प्रदानक्रयणविक्रयणादिक्रियाकलाप कलयन् व्यापारिकपरिपाटीमपि स सकला विज्ञाय, रत्नपरीक्षणशिक्षणमपि सम्प्राप्य स्वपार्श्वे चाऽपरिमिता रत्नसम्पत्ति विज्ञाय, तन्मन्त्रिसामीप्यगमनरटना परिहाय स्वयमप्यात्मान महाधनिक रत्नराशिमण्डितमनुभूय तत्रैव नगरे धनिकजनवसतावेव स्वयनपि स्वकीय विशाल भवन निर्माप्य रत्नादिव्यापार परिचालयन् तत्रत्यप्रसिद्धरत्नव्यापारिवर्गे लब्धप्रतिष्ठो भूत्वा नवनवश्रेष्ठीति ख्याति प्राप्तवान् । नैतावदेव अपितु रत्नाना स सम्राडिति प्रसिद्धिमुपेयिवान् ।

आरम्भे त्वेन रत्नव्यापारिण रत्नज्ञानविमूढमिति मत्वा प्रतारयामासु आद्यऽह्नि किञ्चन लघुकाय माणिक्यमादाय पण्ये गतस्तद्विक्रेतुकामस्तदा सः श्रेष्ठी रत्नक्रेता तद्रत्नस्य मूल्यमप्यल्पतममेव दातु निर्णीतवान् सहस्त्रावधिकस्य रत्नस्य मूल्य तेन पञ्चविंशतिमात्र रूप्यकाणामेव निश्चिनुतेस्म । क्रमेण च पञ्चाशत्, पञ्चसप्तति, शत सार्द्धशत दातुमुद्युक्तोऽभूत्ततोऽपि न तेन विक्रीतम् तदा पुन. स एव द्विशती, त्रिशती, पञ्चशती वा दत्वा तद्रत्न क्रीतवान् । ततस्त्वययमपि सर्वक्रेतॄणा चातुर्य्यं रत्नादानप्रदानादिक्रियाकलाकलापान् व्यजानात् । ततस्तु कुरूरवटोऽपि कुशलो रत्नविक्रेता, सर्वविधरत्नपरीक्षणादावपि पूर्णः प्रशस्तोत्तमो दक्षः सवृत्त ।

एव 'कुरूरवट'स्य सर्वत्र "रत्नाना राजे"ति ख्याति. प्रसृताऽभवत् । तथैव च तदीया गुणा अपि दया-धर्म-परोपकार-सदाचारातिथिस-

कारादयोऽपि निखिल भूमण्डल व्याप्य तत्कर्मानुरूपयशश्चन्द्रचन्द्रिका-वदातीभूते मानवकुले "रत्नानामय सम्राट्" इति भावना आपामर जनमानसे मानसे राजहसीव विहार कलयामास।

इत्थ – नवीनतमस्यास्य रत्नाना राज्ञ सौन्दर्यातिशयस्य रत्नपरीक्ष-केषु रत्नाधीश्वरेषु वैशिष्ट्यस्य, बुद्धिवैभवस्य, च प्रशसा समस्तमनुजमात्र-रसनारङ्गस्थल्या नर्तकीव लास्यमुल्लसयन्ती महाराजस्य 'उग्रसेनस्या' पि कर्णयुगलमस्पृशत्।

स च स्वकीय मन्त्रिण सुबुद्धिनामान समाहूय कथयामास—

महाराज —मन्त्रिप्रवर! श्रूयते हि, इतोऽविदूरे अस्मन्नगराद् द्वादशक्रोशमिते दूरे कस्मिश्चिन्नगरीय-सुविशालभवने राजप्रासादोपमिते विशिष्ट शिष्ट कश्चन रत्नाना राजेति प्रसिद्धिमुपगतो, कन्दर्पदर्पदलन-दक्षलावण्याद्भुतदर्शनीयतमो, नवयुवक सः सौभाग्यशाली, रत्नाकर इव रत्नराशिः, कुबेर इवाऽतुलसम्पत्तिक, स्वरूपतो विलज्जितसुमनाः सुमनाः विराजते धरणिमण्डलमण्डन। स चाऽधुनावधि भवेच्चेदविवाहित-स्तर्हि सद्य एव ससम्मान समानेतव्य इति। कामयते चेदस्मद्राजकुमार्या सह पाणिग्रहणमङ्गल, तर्हि शीघ्रमेव यथा तत्स्वरूप निश्चयतिलकेन समलङ्करणीय एवेति सर्व विज्ञाय, तेन सह सम्मन्त्र्य व्यवहारञ्च निश्चयीकृत्यैव सम्पादनीयोऽस्मन्मनोरथः।

मन्त्री—यथाऽऽज्ञापयति देव। इति प्रणम्य तदर्थमथसाधक इव सवृत्त।

ततः सुबुद्धिनामा मन्त्री सर्व स्वकीयस्वरूपाऽनुरूप परिजनोपायन-वस्तुनिचयपरिराजित प्रकृतकार्यसाधिनी प्रक्रिया चिकीर्षन् तमन्वेष्टुम् प्रस्थित। शनैः शनैरध्वानमतिक्रम्य स्वलक्ष्यभूत प्रभूतप्रसिद्धिपटल-समेधितवैभव रत्नाना राजानमुपातिष्ठत्।

अत्राऽऽगत्य च परस्पर कृतप्रणामावपि न तौ पर्य्यचिनुताम्।

मन्त्री—भगवन् ! अस्त्येकाऽस्मन्महाराजस्य परमसुन्दरी सुन्दरीगण-मौलिमण्डनीभूता प्रभूताऽलौकिकगुणगणगरिष्ठा वरिष्ठा कन्या। तदर्थं समुपयुक्त भवन्तमेव वर बोढुञ्च ता वर मन्ये। यद्यनुमतिर्भवेद् तदर्थं व्यवस्था विधीयेतेति पप्रच्छ।

स. कुबरवटः प्रत्युदतरद् यत् सम्मानीय बन्धो ! अहमपि समृद्धा-मिमा सम्पदमवाप्य महान्तञ्चैन रत्नराशि, सदुपभोग्यञ्च वस्तुजात-मेतावदवाप्य विविधसामग्रीसम्भृत भवनमासाद्य स्वमनोविनोदाय लोकयात्रानिर्वाहायापि जीवनसङ्गिनी कामये। यदि सा मनोनुकूल-वृत्तानुसारिणी भवेत्तदा स्वीकरोमि भवतामनुमोदन प्रमोदन नो गृहस्था श्रमिणामिति।

अथ मन्त्री त स्वात्मना सह स्वनगरमानीय, राजभवन च नीत्वा, प्राघुणिकप्रासादे सम्मान्यराज्याऽतिथिरूपेण तदनुकूला तत्स्वरूपानुरूपा सर्वविधराजोपयुक्ता प्रशस्ता व्यवस्थां कृत्वा - भोजनाद्युपचारनिवृत्त स्वाभीष्टकर्मप्रवृत्त त सकलराजकीयपरिवारसमर्चित, समर्थित विधाय राजसभामायोज्य, तदानी विशिष्टान् शिष्टान् नागरिकान् सम्भावितान् स्वात्मीयान् वाऽमात्यपुरोहितादीनामन्त्र्य सर्वै सह समालापान्, सर्वविधप्रकृतिप्रवृत्ति - प्रतिपत्तये राजकीयसम्मानव्याजेन, समुपाय-नादिक्रियाकलाकलापकौतूहलाऽऽचरणैः, सानन्द वरपरिचयप्रकारं सम्पादयामास।

त समालोक्य सर्वै सभासभाजितैः सानन्दं सहर्षं, सप्रशसं तत्सौन्दर्य्याऽऽकर्षणसम्मोहितचेतोभिः सहमैवैकस्वरेणैवोद्घुष्टम् - यदयं सर्वगुणसम्पन्नो महामहिमशाली कन्दर्पप्रतिकृतिः सुकुमार सर्वात्मना समुपयुक्तोऽप्रतिमप्रभावः प्रकृतिमधुरो वरः श्रेष्ठतमोऽस्मद्राजकुमार्याः सौभाग्यसबर्द्धनो धनिनामग्रणी।

यत्पूर्वं विधिना ललाटलिखित तन्मार्जितुं कः क्षमः | १८६

महाराज—महामन्त्रिन् ! सम्प्रति सकलपरिजनसस्तुते प्रस्तुते कर्मणि न करणीयो विलम्ब । आहूयता राज्यज्योतिर्विद् - राजकुमार्याः पाणिनिपीडनमङ्गलमुहूर्तावलोकनायेति । कारणीया च तदनुरूपा सर्वविधा वैवाहिकमाङ्गलिकी व्यवस्था, सुलग्नञ्च स्थिरीकृत्य, सद्य एव विधातव्यो वैदिको विधिः ।

मन्त्री—सुबुद्धिनामान नैज प्रकटीकुर्वन् प्रोवाच रत्नाना सम्राज सप्रश्रय सोत्साह—सम्माननीयाः ! सम्प्रति भवदनुग्रहभाजनमिम जन विधाय स्वकीयनाम-गोत्र-प्रवर शाखाप्रभृतिभिरपि परिचित कारयन्तु । एव पितृ-पितामहादीनामपि नामधेयैर्भागधेयान्न समुज्ज्वलयन्तु । सर्वमिद पाणिग्रहणाऽवसरे परमावश्यक भवति । येन च लग्नवेलाया गोत्रोच्चारणशाखोच्चारणपूर्वक कन्यादान सम्पत्स्यते ।

रत्नाना राजा—भगवन् ! मन्त्रिप्रवर !! अहमस्म्येको वन्यजातीयो बालः, सर्वे मा 'रत्नाना राजे' ति कथयन्ति किन्तु वास्तविक मामकीन नाम तु 'कुरूरवटः' इत्येव विद्यते ।

'कुरूरवट' इति श्रुतिसुखाकर पूर्वपरिचितमिव शब्द श्रुत्वैव सः सर्वाङ्गवातमहारोगसम्मर्दितसर्वशक्तिक इव सद्य सवृत्तः । स्तब्धो भूत्वा विचारसम्भारभारार्दित इव सपदि पाण्डुरवर्ण सञ्जात । तथाभूता तद्दशामालोक्य स कुरूरवट सकला घटनामादितो वर्तमानस्थितिपर्य्यन्त समुज्जगार । प्रामाण्ये च मन्त्रिणा प्रदत्ता नामेव मुद्रिकामपि त प्रादर्शयत् । तदा सुबुद्धिश्च समस्तमात्मीयमेव कृत्यमिव सिद्धमिति मत्वा विश्वस्त. समभूत् । भवतु, 'ॐ' स्वस्तिरिति ब्रुवन् प्रस्थित' ।

समागत्य च महाराज नि शेष सविशेषोल्लासहासविलासित ब्रह्मणो विधानमेव सफलीभूतमिव पश्याम, इति निगदन् प्रकटयामास—यद् देव ! अयन्तु स एव पुराऽस्माभिरानीतः स एव वनविहरणशीलः श्री-

मद्भिर्दृष्टपूर्वोऽप्यपूर्व इव सम्प्रति भगवता ब्रह्मणा रूपान्तरेण पुनः प्रेषित इवाऽऽश्चर्यकरः सकललोकैकमूर्द्धन्यो धन्यो महामनाः मनस्वी रत्नाकर इवाऽपाररत्नराशिसमृद्धिसिद्ध सिद्धसेवितः सिद्धेश्वरो यक्षेश्वरायितोदारः स्वकीयाकारेण विजितकन्दर्पदर्पं कुरूरवट इति सञ्ज्ञा भजन्नास्ते।

महाराजः---सर्वं समाकर्ण्य, किञ्चिद्विचार्य निखिला पूर्वतनी घटना स्मार स्मार, वर्तमानाञ्च तदीया तथाभूतामलौकिकीमशेषा शारीरिकी मानसिकी वाचनिकी व्यावहारिका कार्यकारिका परमाऽऽश्चर्यमयापूर्वसम्पदधारिका सर्वाशङ्काऽऽतङ्काऽऽमयपङ्काविला सर्वात्मनानिष्कलङ्का मङ्कायितामिवाऽऽलोक्य रङ्कायितोऽपि लङ्काधिपरिपुरिवाऽलङ्कारुण्यपूर्णेक्षणः सुलक्षण क्षणेऽस्मिन् क्षणोल्लाससमाराधनीय एवाऽयमिति नाधुना कावन विचिकित्सा विधातव्येति सम्पद्यता मनोरथः। भगवन् मन्त्रिप्रवर! विधिर्हि विधाननिपुणो न पुनरन्यथा विदधाति। अतो विधेर्विधानमेव मत्वा त्वरितमेव विधातव्यो वैवाहिको विधिः। विधेर्विधानानुसारमेव प्रवर्तन्ते भगवदवतारा अपि दारादिसंयोगवियोगाननुभवन्त पारावारादिसन्तरणादि व्यापारान् कलयन्ति स्म।

सद्य एव सर्वविधा व्यवस्था सम्पादिता राजकुमार्य्या माधव्या विवाहमङ्गल यथाविधि सम्पन्नमभूत्। वरवधूयुगल लक्ष्मीनारायणयुगलमिवालोक्य प्रमुदिताः सर्वे नगरनिवासिनोऽपि महाराज प्रशशसु.। सत्यमेव भणितम् "यत्पूर्वं विधिना ललाटलिखित तन्मार्जितुं कः क्षमः"

---

## दृढप्रतिज्ञः सोत्साहो लभते सिद्धिमीप्सिताम्

कस्मिंश्चित्समये, वने वनेचराणा लुण्ठाकाना समूहो निवसति स्म । ते च परितो निवसता ग्रामाणा मध्ये गत्वा ततो जनान् सम्पीड्य, तेषा धनानि समाहृत्य, भूरि भूरि धन सञ्चितवन्त आसन् । परञ्च न तान् कश्चिद् ग्रहीतु शक्नोतिस्म, न ते केनाप्यवरुद्धा, न च निगडिता न वा कारागृहमेव नीता । किम्बहुना तेषा निवासस्थानमपि न केनाऽपि विदितमेवाऽऽसीत् ।

तस्मिन्नेव वने कश्चिद्दीनः सपत्नीक. मपुत्र एवावात्सीत् । तस्य पुत्रस्य नाम 'आनन्द' आसीत् । यदा स एवानन्दो वृद्धिगतः प्राप्तवयाः समभूत् तदा सः, तेषा लुण्ठाकाना - बलाद्धनहारिणा विषये किञ्चित् किञ्चिज्ज्ञान करोतिस्म । तेनाप्येतदपि विज्ञात यत्तस्य शरीरोपरि परिधारणार्थ यद् वस्त्राणामभावो विद्यते तस्य कारणमपि ते एव लुण्ठाका आसन् । अनेकवार तद्गृहोपरि अपि ते आक्रामन्तिस्म । यत्किमपि जीर्णशीर्णवस्त्रादिकमासीत् तदपि सर्व ते लुण्ठन्तिस्म । अतएव तस्य तादृशी दु.स्थितिरासीत् । तेन, स निश्चित कृतवान्—यत् सः यावत् सर्वांस्तान् न नाशयिष्यति न वा तान् निगडय्य कारागृह पातयिष्यति, न स सुखेन शयिष्यते । इति दृढप्रतिज्ञा कृत्वा सोत्साह तस्मिन् कर्मणि स सलग्नोऽभूत् ।

तस्य तादृशी प्रवृत्ति विलोक्य तस्य विचारधाराञ्च श्रुत्वा तन्मातापितरौ त सबोध्य परिस्थिति, स्वात्मनस्तेषा वा बलाबल, दर्शयित्वा तस्माद्दुष्करात् कर्मणस्ता तस्य प्रवृत्ति पराङ्मुखी कर्तु सर्वविधया वचनरचनया त कथयामासतु । ऊचतुश्च तम् यत् ते दुरात्मान सरलतयैव ते प्राणानपहरिष्यन्ति । इति ।

किन्तु आनन्दस्य विचारधारा न पराङ्मुखी बभूव, प्रत्युत सा सुदृढैवाऽभूत् । सम्प्रति तस्य मनसि विकलता प्रतिक्षण वर्द्धमानैवाऽभूत् यत् स कदा तानन्विष्य नाशमुपनयेत् । इति । एकदा च स स्वपितरौ निवेद्य लुण्ठाकाना निवास-स्थानमन्वेष्टु गृहान्निश्चक्राम ।

यदा च स आनन्दो वन गच्छति स्म तदा सहसैव झञ्झावातेन सह महावृष्टिरपि समापतति स्म । समुत्थितोऽय समुत्पात. प्रवर्द्धितोऽभवत् । मार्गोऽपि न सम्यगिवालोक्यते स्म । निर्जने वने निरन्ध्रे तमसि साध्वसमलीमसे महानिशीथे सर्वथैवैकाकी स्वशरणीकरणार्थं कञ्चनाऽऽश्रम परितो वीक्षमाण सहसैव लता-प्रतानाऽऽवृत मण्डपायितगुल्मान्तरितप्रदेशान्निष्क्रान्ता वाताऽऽन्दोलिततरुशाखान्तराले क्वचिद् दृश्यमाना क्वचिदनवलोकनीया मन्द मन्द "टिमटिमा"यमाना दीपकद्युतिमपश्यत् । स च तामेव लक्ष्यीकृत्य प्रस्थितो, नतोन्नताया वन्यावनौ स्खलन् - पतन् - गच्छन् कथञ्चन लक्ष्यमालक्ष्य प्रमुदितो जातः ।

स च तामेवाऽऽलोकप्रभा सहसा गृहद्वाराद्बहिर्निःसरन्ती चाक्षुषीकृत्य, तत्रैव गतवान् । कपाटाऽऽवृत्त द्वार समेक्ष्य बहिर्मार्गस्थ एव कराभ्या तत् (द्वारम्) खटखटायते स्म ।

सहसा द्वारमुन्मुद्रितमभूत् । स च द्वारतो विलोक्यैव महाश्चर्यमन्वभवत् । अहो, महारण्येऽपि, कुत एवैतत्सुविशाल-राजप्रासादमिव महामहादुर्गमिवाऽगम्यमुद्वीक्ष्य समयकम्प क्षण मुग्ध इव स्थितो चिन्तयति स्म । ततस्तत्कृत खटखटशब्द-कर्णकुहरीकृत्य द्वारमुद्घटितमभूत्

कथमपि काचन यष्टिधारिणी स्थविरा दृष्टिपथ मुपगता। तामेवैका विहाय तदानी नान्य· कश्चन प्राणी तत्राऽऽसीत्।

आनन्द सद्यः प्रोवाच—पितामहि! सम्प्रति निपतति नभस्तलाद् धारासम्पातः। न कश्चन बहि स्थातु शक्नोति भवत्या अनुमति-श्चेदहमपि क्षण लभेय विश्राम भवत्या पादपद्मे भवनाऽभ्यन्तरे।

स्थविरा—वत्स! अभ्यन्तरे तु भविष्यति भवतो महती दु.स्थितिः। माऽऽयाहि नैतद् गृहस्थानामावासभवनम्?

आनन्द—पितामहि! किमर्थं व्यर्थं मामवरुणत्सि? कोऽत्र हेतु·?

स्थविरा—न जानासि त्वम्, गृहमेतल्लुण्टाकानाम्, ये हि सतत रात्रि-दिन परित आहिण्ड्य-आहिण्ड्य, अन्विष्याऽन्विष्य, यात्रिणो व्यापारिणो धनिकान्-भ्रान्त्याऽपि समागतजनान् निष्पीड्य, सम्मर्द्य तेषा समस्त धनादिकमशुकादीनि च बलादाहृत्याऽऽनयतामेव लुण्टाकाना निवास-भवनम्। त एव हि मामप्यत्र स्वगृहात्समुत्थाप्यानीतवन्त। ममयैव च-मर्व सर्वविध कार्यं कारयन्ति। नैतेषु लेशतोऽपि दया, नवा सहाऽनु भूतिरेव, न च क्रियादाक्षिण्यम्। व्यवहार पराङ्मुखा मुखरा प्रखराः खराचाराः दुराचाराः दुराधर्षाः सुलभाऽऽमर्षा निवसन्ति। एते हि यस्य कस्यापि सर्वस्व हरन्ति, न तत्समीपे किमपि मुञ्चन्ति किम्बहुना यदि तस्य पार्श्वे न मिलेत् किमपि, तदपि तस्य प्राणानेवाऽपहरन्त्येव येन तेषामातङ्क सर्वत्र प्रसरेत्। इति व्यजिज्ञपत्।

आनन्दः—पितामहि! यदि प्राणा एवापह्रियन्ते तैस्तर्हि यथेच्छ-मपहरन्तु मे प्राणान्। वहिर्भागे विमुक्ताकाशे प्रकाशाऽऽभासे समापतित-धारासम्पाते निपातोन्मुखप्राणान्ताऽनुभवविधूतधैर्ये मयि नाधुना विद्यते शक्तिर्बहिः स्थातुम्। एवमेव शीतवातवृष्टिभिः प्राणा ह्रियन्त एव व्यर्थम्, अकिञ्चित्कर इव व्यर्थमेव मदीयान् प्राणास्त्यक्ष्यामि, तेन तु यदि तेषां हस्तैरेव यदा नेष्यन्ते मेऽसवः तर्हि सुखित· सन् सङ्कटादस्मात्

सुलभमृत्युर्भविष्यामीति। वदन्नेव स्थविराया पृष्ठलग्न एव सद्योऽभ्यन्तर प्रविवेशेति।

स च यावद् गृहाऽभ्यन्तर प्रविशति--तावद् बृष्टिरपि बृद्धिमभजत्। गृहाभ्यन्तर प्रविशन्नेव समन्ततो विलोकते यदत्राऽऽकोणकोण सुवर्णशकलैः सम्भृता नाना-चर्मभस्त्रिका सूत्रनिर्मिता भस्त्रिका सहस्त्रशः सुरक्षिताः सुस्थिता राजन्ते। विलोक्य चाश्चर्यचकितः सन् तत्रैव स्थिर्ति, शयनं, स्वाङ्गविलुठन, सानन्द कलयति स्म।

अत्रान्तरे तदध्यक्षा लुण्टाकास्तस्करा समे समागताः। ते च ता स्थविरामपृच्छन् कोऽयमिति, कुत आगत इति। अस्त्यस्य सविधेऽपि किमप्यर्हत्तम वस्तु, रत्नादिक वेति ?

स्थविरा--अरे! न पश्याम्यस्य शरीरोपरि परिधानीयमपि वसनजात, किञ्चिन्मात्रामशनसामग्रीमपि कुतः पुनर्धनाशा ?

इति वृद्धाया वचनमाकर्ण्य समुपजातकौतूहला प्रहसन्त प्रावोचन्, यत्-तर्हि दीनोऽयमस्मद्राज्यमधिवसन्नेवाऽऽस्ते। किमेनमधुनैव सहराम आहोस्वित् प्रभाते घातयाम! अस्तु सम्प्रत्यस्माक मध्ये पञ्जरगतः पक्षीव स्वयमेव जालपतित सवृत्त, क्व यास्यति, प्रातरेवैनेन सह सलाप विधास्यामः।

आनन्दोऽपि सर्वं तदुक्तमाकर्ण्य व्यचिन्तयद् यत् कार्यमिद विपरीतमिव प्रतिभाति। अत सानन्द प्रोवाच—

आनन्दः—( निर्भयम् )—महोदयाः बाल्यकालादेवासीन्मे मानसे—प्रवृत्तिर्यदहमपि लुण्टाकस्तस्करो भवानीति, अतो भवता सेवा कर्तुमहमत्र समागतः। इति श्रुत्वा चैतेषा मनसि सन्तोषः सञ्जातः।

तस्करा --अहो! किमिद न कथ्यते, वयन्तु स्वयमेव नवीन जनमन्वेष्टु प्रवर्तमाना स्म, स्वीकुर्मश्च नवागत सहचरम्। किन्तु भवति

तदर्थं परीक्षाऽपि दातव्या। यो ह्यस्मन्मण्डल प्रविविक्षुर्भवति प्रथम स्वकीयकार्यकौशल प्रकटयितु परीक्षा दातुमुद्युक्तो भवति। तस्या यदि समुत्तीर्णश्चतुर सो ह्यस्मदीय सहचरः सुकर. सञ्जायते। यश्चास्माक शिष्यो भवति तेनैतादृश चौर्य्य करणीय भवति यत् न तस्मिन् स्वयमेव बन्धनगतः स्यान्न वा कस्यचनाऽपि हानिरपि स्यात्। इत्थमेकवारं करोति, सोऽस्माक भृत्यो भवति किं वा पोष्यश्चेति। यश्च तथैव द्विवार कुरुते सः समानता प्राप्नोति। पुनः स एव दक्षस्तथैव त्रिवारमपि समाचरेत् सोऽस्माकमध्यक्षः सन् सम्मान्योऽस्मदर्हणीयो भवति सर्वशिरोधार्य (सरदार इति)। परन्त्वेतदपि न विस्मर्तव्यम्—यद् यस्य स चौर्य्यं विदधाति न स त विजानीयात् यदमुको मे चौर्य्यं व्यधादित्यनुमीयते इत्यपि शङ्का न भाव्या तस्य मनसि। इति। किम्बहुना इत्यपि शङ्कातन्मनसि नोदीयाद्, यन्मम तद्वस्तु केनापि चोरित भवेदिति। न वा तद्वस्तु स्वामिनोऽनुमितावपि प्रवृत्तिः सम्भावना चेति (भवेत्) इत्थमेतादृश हस्तलाघव य प्रकटयति, स एवाऽस्मन्नायको (नेता वा भवितुं प्रभुर्भवति। इति।

आनन्दस्तु तदर्थं प्रथमत एव सन्नद्धः सुसज्ज एवाऽऽसीत्। स एवाऽऽगामिनि दिवसे शीघ्र प्रभात एव तद्भवनान्निसृत्य, बहिरागतः। निर्गमनकाले च स तद्गृहादेक पादुकायुगल (उपानद्युगलम्) गृहीत्वा बहिरागतः। किञ्चिद् दूर चलित्वा, स. स्वगृहीतात् पादुकायुगलादेका पादुका (उपानहम्) मार्गे प्रक्षिप्तवान्। मध्येऽध्वानमेव ता निक्षिप्य तत्पार्श्वे च सुविस्तृतक्षुपपुञ्जे स्वात्मन (स्वशरीरम्) तथा प्रच्छन्न चकार यत् कोऽपि पान्थो न त प्रेक्षितु, विज्ञातुमपि, शङ्का चाऽपि कर्तुं न पारयति स्म।

क्षणानन्तरमेव तेनैव पथा कश्चिदेकः कृषीबलो बलीवर्दं नयन् समागत.। स च स्वकीय बलीवर्द विक्रेतुं विक्रयणस्थान प्रतिगच्छन् तत्रागतो यत्र सैकोपानत् निपतिता (तेनानन्देन निपातिताऽऽसीत्)

समागत एव सुन्दरमनोहरा विविधहस्तचातुर्य्योल्लासिन्येकोपानत् केनाऽत्र निपातिता, कस्तथाविधो भ्रान्तो मुग्धोऽभवद् यो ह्यत्र स्खलिता स्वकीयमेका बहुमूल्यामपि न व्यजानादुपानहम्। हन्त तद् दुर्भाग्यमिति। इति विचिन्तयन्नेव ता तथावस्थिता परित्यज्यैवाग्रेसर' सन् गत.।

यद्यपि स तामुपानह दृष्ट्वा लालायितोऽभूत्। किन्त्वेकामेव गृहीत्वा कि करिष्यामीति विचार्य ता त्यक्तवान्। तत स आनन्द क्षुपगुल्मतो बहिर्निःसृत्य तामेवोपानहमुत्थाप्य - शीघ्र धावित्वा तस्मिन्नेव मार्गे पुनस्ता न्यदधात्। तत कृषकोऽप्यग्रे गत्वा पुनस्ता दृष्ट्वाऽन्याञ्च पूर्व-दृष्टसहचरी मत्वा ग्रहीतुमैच्छत्। गृहीत्वा च पूर्वपरित्यक्ता तामानेतु पुन पश्चान्मार्गमगच्छत्। व्यचिन्तयच्च स। किञ्चिदेव दूर प्रस्थित एव तस्य मनसि जागरिताऽभवल्लोभातिवृत्ति। कश्चन अज्ञात एवामीदय मुग्ध। सम्भवेदग्रे गत्वा, स्मरन्नेवैनामन्वेष्टुमागच्छेत्। अतोऽहमेवैना नीत्वा चलेय। यदि सो मिलिष्यति तर्हि तस्मै दत्त्वा प्रशसाभाजन भविष्याम्यन्यथा नेष्याम्येनामद्वितीया द्वितीया लौकिकी गवेपयिष्यामीति। स्वमनसि विचिन्त्य बलीवर्दञ्चैकस्य तरो शाखाया सम्बद्ध्य तामानेतु पश्चाद्भाग प्रतिनिवृत्त। तदानी प्रतिनिवृत्ते तस्मिन् सद्य' क्षुपगुल्मान्तरित स आनन्दो बहिरागत्य तं बलीवर्दं तच्छाखात' समुन्मुच्य नीत्वाऽपासरत्। समागतश्च निर्जनारण्यानीमध्यस्थ - तस्कराऽऽवासमिति।

ततः सः त बलीवर्दं तेभ्यो लुण्टाकेभ्यः समर्पयत्। ततस्ते त स्व-शिष्यं चक्रु'। तन्मुखात् तत्तथाविध कार्यं श्रुत्वा प्रशसाञ्च व्यदधुः।

एतेनैव नानन्दस्य चेतसि शान्ति समभवत् यतो हि स तेषा समेषामध्यक्षो भवितु' मनोरथान् सततमचीक्लृपत्।

ततः पुनरपि स गृहादेका रज्जु' समादाय विपिनमगाहत।

अत्रान्तरे च कुशलतया सुदूरदूरपर्य्यन्त विलोक्य तामुपानहमन्विष्याऽप्राप्य च प्रत्यागत । किन्तु तत्र बदीवर्दमपश्यन् व्यचिन्तयत् यत् स कुत्रापि वने हरित घास चरितुकाम. शाखात विमुक्तबन्धन. स्वच्छन्दचारी योगीव विहरतीव मे बलीवर्द । इति नाधुना मिलति, भवतु, स्वत एवागमिष्यति मे गृह एवेति ।

इति कृत्वा पुन स्वगृह गतवान् कृषीबल । अपरञ्च बलीवर्दं वृषभसम्मर्दे ( मेलाख्ये-पण्यकेन्द्रे ) विक्रेतुमनैषीत् ।

पुनरपि सः कृषकस्तेनैव पथाऽऽगतस्तत्र ।

आनन्दोऽपि सर्वं तच्चेष्टितमक्षिलक्ष्यीकृत्य सर्व ज्ञातवान् ।

सः (आनन्द) सद्य सुदूर तन्मार्गे, पार्श्वस्थस्य कस्यचन पादपस्य शाखायामेकस्या ता रज्जु दृढ बध्वा, दोलायमाना ता स्वकक्षयोरन्तर्भागस्था विधाय, स्वय मृत इवाऽवलम्बितोऽभूत् । यथा चैन कश्चन,– तथाविधस्तस्कर सर्व धन विच्छिद्य त च मारयित्वाऽस्मिन् तरुशाखायामेवाऽवलम्बयामास इति चिन्तयेत् ।

आनन्देन विचिन्तित तत्सर्वं, सत्य सिद्धलक्ष्यमिवाऽभूत् । तत्राऽऽगतः कृषीबलोऽपि तथाविध शाखावलम्बित त विलोक्य तथैवाऽमन्यत यथा स आनन्दोऽकल्पयत् ।

कृषको हि मार्गे त तथास्थितिगत प्रेक्ष्य मनसि दुःख विदधत् प्रार्थयामास, नाथ ! यथैन मारयित्वा लुण्टाका एव वृक्षावलम्बित व्यदधुस्तथैव तानपि सद्यो निहत्य गलपाशलग्नानित्थमेव पादपशाखालम्बितान् कारयेति । इत्थ शोचन्नगमत् ।

यथा हि कृषीबलः सुदूर प्रयातस्तत्क्षणमेव स सद्यो वृक्षादवतीर्य रज्जुञ्च स्वस्कन्धे निधाय पाददण्डीमनुसरन्नेव शीघ्रातिशीघ्रमग्रे धावन् कृषकानुसृतमार्गे एव पुनरग्रे मध्येमार्ग शाखिशाखावलम्बिता विधाय ता रज्जु स्वयमपि यथापूर्वं–

विकृतमिव विधाय स्वाननं कान्तिहीनं,
धृतनिजगलपाशः शाखिलग्नस्ततोऽभूत् ।
पुनरिह कृषकोऽपि प्रेक्ष्य चैनं तथाऽन्यं
निहतमिह वराकं तस्करैर्दुःखितोऽभूत् ॥१॥

इति तस्करकृत्यान्येव चिन्तयन् कृषीबलोऽवनितले महोत्पातान् तस्करजनितान् मन्यमान एव चिन्तामग्नोऽग्रे प्रस्थित एव ।

पुनरप्यानन्दः सद्यस्ततोऽपि स्वात्मानं मोचयित्वा तदग्रे शीघ्रमपसृत्य तन्मार्गपतित एव कस्मिंश्चित्तरौ पुनः पूर्ववत् लब्धगलपाश इवात्मनो नाट्यं दर्शयन् वृक्षावलम्बितोऽभूत् । पुनरित्थं तृतीयवारमपि तथैव तथाविधमेव तदाऽऽकारं तत्सदृशमालोक्य—

शङ्काऽऽतङ्काकुल इव महान् मन्यमानस्तमेकं
भ्रान्तः क्लान्तोऽधिकजनहृतिं रज्जुपाशैकदण्डैः ।
लुण्टाकानामकरुणमहापातकं भावयन् यः
सोऽयं ह्यन्यो प्यथ किमुत भोः ज्ञापनीयस्ततोऽगात् ।

का नाम वास्तविकी स्थितिः सोऽयमेक एवास्ति किमुतान्यो वा इति । यतो हि प्रथममप्ययमेवासीत्द्वितीयं वारमप्ययमेव पुनरधुना तृतीयवारमपि स एवाऽयमिति किं रहस्यम् ? त्रयोऽपि किमु समानवर्णाकाराः ? त्रिविधरूपो वैकः ? किं वैन्द्रजालिकी लीलेति सम्प्रति निर्णेतव्यमिदम् । अथ ह्येकश्चेत् तर्हि कथमीदृग्दूरस्थितेऽपि पादपे सैवैकः । अन्यश्चेत्, तर्हि निर्जनेऽस्मिन् वने न जाने कियन्तो भाग्यहीना एतादृशीं स्थितिमुपनीता घातिता वृक्षेष्ववलम्बिताः सन्तीति मया त्वयमेवैक एवाऽवलोकितः । इत्थञ्चेन्मयाऽपि नाग्रे गन्तव्यम् । दुष्टा निष्करुणास्तस्करा अत्राऽप्यागच्छेयुर्मामपि तादृशीं दशां नयेयुः तर्हि किं करिष्याम्यहमेकाकी । हन्त हतोऽहं मन्दभाग्यः ।

अतोऽप्यग्रे गमनं निषेध्य प्रथममस्य वास्तविकीं स्थितिं विज्ञायैवाग्रे पादरक्षणं करिष्यामीति निर्णीय, मार्गैकभागस्थविशिष्टच्छाये वटतरौ कस्याञ्चन शाखाया बदीवर्दं निबद्धच, पूर्वदृष्टस्थलं प्रति परावृत्य तमेव द्रष्टुं स. प्रययौ।

यतो हि स कृषक तत परावृतोऽभूत् सद्य एव स आनन्दः वृक्षादवरुह्य रज्जुमपि निर्ग्रन्थिका विधाय स्कन्धस्था कृत्वा च, ततोवटशाखानिबद्ध बलीवर्दञ्च विमुच्य नीतवान्। लुण्टाकाना गृहमागत्य तं बलीवर्दं यथास्थान निबद्ध्य समर्पितवान् तेभ्यः। तस्य तत्कर्म वीक्ष्य विस्मिता सर्वे तस्कराः सम्मान व्यदधुः पुष्पमालाभिश्च सानन्दमानन्दमर्चयामासु.। भूरि भूरि त प्रशशसु। जगदुश्च ते सम्पति भवानस्माक सम्मानितः सदस्यः सवृत्त।

इतश्च बहुदुर गतेऽपि कृषीबले यदा सः वृक्षे दत्तगलपाशो जनः क्वचन न मिलितस्तदा हताश स पुन. प्रत्यागतो यत्र त बलीवर्दं वटशाखानिबद्ध कृतवान्। प्रत्यागत्य च त बलीवर्दमपि नावेक्षत। महद्दुःखञ्चान्वभवत्।

अधुना कृषकस्य समीप केवलमेकमेवाऽवशिष्टो बलीवर्द. स हि तमेव विक्रीय तन्मूल्य-धनलाभादेव स्वोदरपोषणा विधास्यामि इति विचिन्त्य तमपि विक्रयणार्थ नीत्वा यदाऽगच्छत् तदा मार्गे स्वप्रयत्नेन यथा साध्य लुण्टाकाना तस्करादीना दृष्टि वञ्चयित्वा कथञ्चन वन्यपथा गच्छन् यावत् तत्स्थलसमीपमायाति यत्र पूर्वं तस्य बलीवर्दद्वयी निबद्धाऽपि वृक्षाशाखातो विलुप्तोऽभवत् तदानीमेव तत्र किञ्चिद्दासन्न एव कस्यचन बलीवर्दस्य 'रम्भा' शब्द. श्रुतिपथमुपगत। श्रुत्वा च व्यचिन्तयत् यत् सोऽयमेव मे बलीवर्दो यत्र कुत्राऽपि तृणलोभेन शाखातः कथञ्चन विमुक्तः सन्नितस्ततो बभ्राम ( व्यभ्रमत् ) स एवाऽधुनाऽत्रैव चरति तच्छब्दानुसारिण्येवैषा 'रम्भा' अत स एव पार्श्वे क्षुप-गुल्म-

पुञ्जे विचरति चरति च बालतृणानि हरितागि वा शाद्वलानि । इति निश्चित्य तमानेतुमेव मनश्चक्रे । तत स्वहस्तगतमपि बलीवर्दं पार्श्व-स्थतरुशाखानिबद्ध विधाय तमन्वेष्टुमानेतु वा तदीय-रम्भा-शब्दा-नुसरणमरचयत् ।

तत स आनन्द.—यो क्षुपगुच्छाऽभ्यन्तर प्रच्छन्नः स्थितः सन् कृषक वञ्चयितु बलीवर्दाऽकारिणी 'रम्भा' ( बलीवर्दवन्नर्दनम् ) कुर्वन्ने-वाऽऽसीत् । स सद्यो बहिरागत्य तमपि तदीय तृतीयमपि बलीवर्दं नीत्वा-लुण्टाकाना सम्मुखे तमुपास्थापयत् । समार्पयच्च । इत्थ पुनरपि बलीवर्दमानीत दृष्ट्वा सर्वे तदीया विचित्रा बुद्धि क्रियादाक्षिण्यञ्च प्रशसन्त स्वनियमानुसार त स्वकीयाध्यक्ष कल्पयन्ति स्म-प्रार्थया-मासुश्च ते साम्प्रत भवानेवाऽस्मानाज्ञापयतु—सम्प्रत्यस्माक स्वामी जातो भवान् वयञ्च निदेशानुकारिणो दासा सवृत्ता. । प्रदर्शयतु पन्थान-मग्रेतनकरणीयस्य तस्करव्यापारस्य, कुत्र कथकार कलयेम स्वव्यापार-मिति निर्दिशतु कञ्चन नवीनमेव प्रकारमिति ।

तत आनन्दः सर्वान् सम्बोध्याकथयत् मम निदेशानुसारमेव सर्वं विधातव्यमिति । अस्तु तर्हि परश्वः अमुकचिह्नान्विते, तस्मिन् नगरे अमुकगृहे प्रविश्य सर्वैरेव भवद्भिः सहत्य चौर्य्यं विधातव्यमेव। सावधानतया - तद्गृहं दर्शने तु महद् दरिद्रमिव प्रतिभाति परञ्चाऽ-पारसम्पत्सम्पन्नमस्तीति । भूमौ खातितानि सन्त्यपाररत्नानीति । अन्येऽपि समुपयोगिनः पदार्थाः सन्ति भूयास । आसीत् पुरा तन्महा-महिम राजसद्मेति । तदुक्ति श्रुत्वा सर्वे लुण्टाकास्तथा कर्तु सुमनद्धाः समभूवन् ।

तत. स आनन्दः एकाकी स्वगृहमागत्य स्वजनकमवोचत् यत् परश्वः अस्मद्गृहे सर्वे ते लुण्टाकाः सहत्याऽऽगमिष्यन्ति । अतो भवान-द्यैव राजभवन गत्वा राजानमेव सर्वविधा सूचना प्रयच्छतु । सर्वात्मना सावधानतया च तत्र प्रच्छन्नवेषेण सकलैः सैनिकैः परितो मद्गृहमुप-

स्थातव्यम् । यथा हि ते समागच्छेयुस्तत्क्षणमेव सर्वे ते निगडनीया । नोपेक्षणीया न वा दयनीयाश्चेति । सर्वविधया सुव्यवस्थया भाव्यमिति निर्वेद्य विज्ञापनीयो भूपतिः ।

सर्वत्र तत्तथाविधा सम्यग् व्यवस्था सञ्जाता । आरक्षकविभागस्थाः कर्मचारिण सपरिकराः सुसाधनसज्जिता समन्ततो नियुक्ताः सञ्जाता । यथासमय सर्वे ते लुण्टाकाः यथा हि तस्मिन् गृहे प्राविशन् तथैव राज-पुरुषै. सन्नद्धै सद्यो निगडीकृताः, वन्दीकृताश्च, सर्वास्तान् सम्यङ् निगडय्द - कारागृह निगात्य, आजन्मकारावासदण्डेन तानदण्डयस्तान् महाराजो नरपति । यो हि तान् ग्रहीतु सतत प्रयतमान आसीत् ।

तत स आनन्दः सोत्साहो दृढप्रतिज्ञ स्वकीयबुद्धिवलेन सर्वान् कारागृह पातयित्वा तदीयामतुला सम्पद स्वयमानीय तद्भवन स्वाय-त्तीकृत्य सर्वत्र स्वप्रभाव प्रसार्य्य सर्वसम्पत्सौख्य सानन्दमन्वभवत् ।

उक्तञ्च :—सत्यमेव—"दृढप्रतिज्ञः सोत्साहो लभते सिद्धिमीप्सि-ताम् ।"

—:—

# उदारं श्रयते लक्ष्मीः

यो हि धनानि तृणाय मन्यते, यश्च नित्य करद्वयेन [ अञ्जलिना वा ] यथा यथा वितरति तथा तथैव सा सुप्रीता लक्ष्मीः समुदार त नरवर सहस्रैरेव करैः सुदृढ निबध्नाति, न विमुञ्चति कदाचिदपि त तदौदार्येण समाकृष्टा, विरूढभावा च ।

तथाहि--आसीदेक कश्चन विलक्षणप्रवृत्तिको व्यापारी भाग्यभूति-नामा । यो हि स्वकीया समस्ता सम्पत्ति भिक्षुकेभ्यो दीनेभ्यो याचकेभ्यो दत्वा, सर्वदा दीनान्धाना हि परिरक्षणे तत्पर एवाऽऽसीत् । कि बहुना, अन्येभ्योऽपि ऋणस्वरूप धनमादाय, दीनेभ्यो वितरति स्म ।

स च यत्रैवावात्सीत् तत्र तत्रैव परम-सम्पन्न स्वात्मान विदेश-व्यापारशील, महामहाबलददलवाहक [ बारूदवाला व्यापारी ] सङ्घेश्वर घोषयति स्म । कथयति स्म च सर्वान् तत्रत्यान् जनान्—यद्धि-मामकाः भूयासो बलदवाहका सहयोगिनो वाणिज्यरता यूथशः प्रदेश गता सन्ति, मदुपजीव्याः । यदा च ते प्रत्यावर्तिष्यन्ते तदा समेषा भवता द्रव्य प्रत्यावर्तयिष्यामि । यतो हि ते महत्कार्तस्वरभार बृहन्मुक्ता-फलप्रकर, विविधञ्च रत्नराशि अपारञ्च धनमानेष्यन्ति । इति ।

इत्थ प्रलोभनानि प्ररोचनामयानि वा वाक्यानि श्रुत्वा सर्वोऽपि नागरिको जनः, त महाधनेश्वरमेव मत्वा तस्मै यथेप्सित धन प्राय-

च्छत्, यदा यदैव सः यस्मात् –यावत्परिमाणक धन लब्धु कामयते स्म, तस्मै सोऽपि विनैव सङ्कोच तावत् धन ददाति स्म । महामहाधनिक-रूपेण परमोदारत्वेन तस्य सर्वत्र ख्यातिः प्रासरत् । किम्बहुना, तत्रत्यो राजराजो नाम महाराजोऽपि तदीया कीर्ति श्रुत्वा तेन सह मैत्री स्थापयितु तदीया वा धनराशि स्वकोषे सरक्षयितुञ्चाकामयत । स च तद्विषये तस्यौदार्यचर्चा तस्याऽऽश्रितााना भूयसा वाणिज्यरताना व्यापारार्थ सुदूरप्रदेश गताना, स्वव्यवसायेन महद्धन-रत्नराशि समुपार्ज्य समानयता, तत्सहयोगिना समागमन–प्रायोगमन–प्रतीक्षाया पार्श्वस्थ-धनवितरणादिकी प्रक्रिया श्रुत्वा दृष्ट्वा चैतावाननुरक्तोऽभूत्—यत् तेन साक स्वसुताया पाणिग्रहण कारयितुमपि सन्नद्धोऽभवत् ।

अथैकदा नगरस्था अन्ये व्यापारिणः ये हि ऋण दत्वा मुहुर्मुहुरेनं समुपकुर्वन्त आसन् ते सर्वे मिलित्वा रात्रौ ऋण-दातार समागत्यास्य गृह प्राचुः, यत्—भवतो वाणिज्यरताना सहयोगिना यूथस्य समागमने [ प्रत्यागमने ] सम्प्रति कियदवधिक कालोऽवशिष्यते, प्रतीक्षणीयो वा समय , यस्य प्रतीक्षाया स्व-स्वधैर्यसीमानमपि तावन्त लम्बायमान करवामः ? नाद्यावधि तु भवदनुयायिना समुपार्जकाना यूथस्य दर्शनमेवं समभूत् न वयमनोऽधिक समय प्रतीक्षितु पारयितु वा शक्नुमः । अतस्त्वरितमेवाधुनाऽस्माभि प्रदत्त धन प्रत्यावर्तयेति । इति ते ह्यनेक-धाऽत्राच्यवाच्यान्यपि त प्रत्यचुः श्रुत्वा चैतेषा दुर्वचनानि, सोऽपि विचित्रो व्यापारी भाग्यभाग्यभूति भूतिनामा स्पष्टमेव तान् व्याजहार । यत्—भवन्तः किमपि कथयन्तु, गालिदान वा कुर्वन्तु, यथेच्छ वाऽपशब्दान् मामुद्दिश्य निगदन्तु, नैतानि वो वचासि ममोद्वेगकराणि भविष्यन्ति, यतो ह्यह साम्प्रत सर्वथैव विवश. । नाह कपर्दिकामपि प्रत्यावर्तयितु प्रभुरभविष्यम् भवद्भ्यो, यावत् सुदूर गताः मे सहयोगिनो व्यापारिणोऽनुयायिनश्च, न पुनः प्रत्यागमिष्यन् न वा समुपाहरिष्यन् मह्यं समुपार्जित द्रव्यमिति ।

आगतेषु च तेषु समर्पिते वा द्रव्ये, सद्य एव यथा यथा यत् यत् येभ्यो येभ्यो गृहीत तत्तत्सर्व द्विगुणीकृत्य प्रत्यर्पयिष्यामि। ततः प्राक् किमपि कर्तुं नाह पारयेयम्। तावत्काल प्रतीक्षन्ताम्। अन्यथा यदभिलष्यते तद्विधीयताम्। किमत पर निवेदयामि। भाग्यभूतिमुखात् स्पष्ट सर्वं श्रुत्वा समस्ता ऋणदातारः [ उत्तमर्णा ] प्रत्यागता। व्यचिन्तयश्च किमधुना कर्त्तव्यम्! कथमेतस्मात् स्वधन पुनर्लप्स्यामहे—इति चिन्ताकुला ह्यभवन्। सर्वे चैकीभूय तत्रत्य कञ्चन शास्तार निवेदयितु मल्लिकोपनामकमात्मीय विशिष्ट धनिकवर पुरस्कृत्य प्रतिजग्मु, निवेदयामासुश्च त प्रथम तात्कालिकी परिस्थिति मल्लिकमेव। स हि क्रोधाविष्टान् सर्वास्तान् तथा कर्तुं रुरोध। उक्तवाञ्च मल्लिक —

मल्लिक —बन्धव! शास्तु सविधे गमनात् प्राक् प्रथम स एवास्माकमधमर्ण ( ऋणगृहीता ) कि न बोद्धव्य? भवन्तो यदि विमनस्का सन्ति तर्हि सर्वेऽत्रैव तिष्ठन्तु, अहमेव तत्सविधे गत्वा मृदुगिरा प्रक्ष्यामि त समुदारम्। सर्वात्मना नीचैरुच्चैर्वा नीत्या रीत्या च ससामवादैर्निवेदितेऽस्माभि, यदि गृहीत धन प्रत्यावर्तयितु न प्रतिज्ञास्यति म तर्ह्यग्रेसराः भविष्याम किमपि कर्तुम्। महाराज वा राजराज निवेदयिष्यामः। इति। सम्बोध्य तान् समाधाय सर्वान् च मल्लिको भाग्यभूते समीप गन्तुमुद्युक्तोऽभूत्। तथा कृत्वा, मल्लिको भाग्यभूर्ति प्रोवाच —

मल्लिकः—सखे! कथमेव भवान् समुन्मत्त इव सम्भूतः? न मनागपि विचिन्तयसि? यत् एते सर्वे व्यापारिण. ये हि भवता कृते उत्तमर्णाः [ ऋणदातारः ] समभूवन्—प्रत्यह भवतो द्वारमागत्य—अनर्गल निर्मयाद वा समुपालम्भ ददतोऽवाच्यवाच्यानि प्रलपन्ति। मुहुर्मुहुः कथयन्ति च सद्यः प्रत्यर्पयास्मद्दत्त समस्त धन [ ऋणम् ] तथापि न ते किमपि कर्णगत भवति —[ रिङ्गति वा मनागपि न ते कर्णे लिक्षा ] विक्षिप्तता मुपगतो वा भवान्—यो हि हिताहितमपि, मानावमानमपि नात्मनो गणयसि? कलकल वाऽहर्निशं तेषा श्रुत्वा नोद्विजते? श्रुतं हि—एक-

स्मात् मुद्राणा षष्टिसहस्रमितो धनराशीर्गृहीतोऽपरस्माच्च अशीति-सहस्र दीनाराणा ऋणरूपेणावाप्त भवता ? एतावता महता धन-राशिना कि कृत भवता ? अरे-तावता तु न जाने कियन्तो व्यापारा: प्रचलिता भवितु शक्या भवेयु: ? किन्तु न किमपि कृत भवता, व्यर्थमेव व्ययीकृतोऽय तावान् धनराशि [ स्वात्महेतवेऽपि नोपयोग: कृत:-सकलं हि दीनेभ्यो याचकेभ्यो वितरित धनमिति किं कथयाम: । सम्प्रति लब्ध तद् धन कदा कथं तेभ्यो दास्यति भवान्, प्रत्यावर्तनस्य को वा समुपा-यश्चिन्तित ? एतावानधमर्णोऽपि [ ऋणभारभग्नोऽपि ] कथ निःशङ्कःशेते भवान् ? कथ वा ते नयनशय्यामधिश्रयति निद्रादेवी ? इति बहुधा तेन समुपालब्धो भाग्यभूति· समुदारचरित: सप्रश्रय प्रोवाच :--

भाग्यभूति :--भगवन् ! नास्त्यणुमात्रमपि मे भयम् । अशीति-सहस्राणा दीनाराणान्तु का वार्ता, मत्सविधे तु विद्यतेऽतुलो धनराशि: मामकीना:, व्यवसायरता जलदवाहका यावन्नायान्ति-तावत् - काल प्रतीक्षता भवान् । समायाते च वाणिज्यरतयूथे उत्तमर्णा [ऋणदातार ] यद्य देष्यन्ति, यावत्परिमाणक वा धनमभिलप्स्यन्ते तावदेव धन यथेष्ट तेभ्य: सहर्ष - प्रत्यर्पयिष्यामि । द्विगुण चतुर्गुणमपि वितरिष्यामि तेभ्य: यतो हि प्रभूततरमस्ति मत्समीपे धन रत्नादिकञ्चेति । [ इत्थ सगर्वं भूरि भूरि प्रशसा, स्वात्मश्लाघामय वचन भूयो भूयोभिमान-सम्मानोद्-गारसम्भृत भाग्यभूतिमुखान्निःसृतं समाकर्ण्य मल्लिकनामा व्यापारी सकोपमुवाच ] ।

मल्लिक --कथमरे ! विक्षिप्त इव प्रलपसि, कथमिमा कथानिका चाकचक्यमयी शैलूषिकामिव मा श्रावयसि ? जानामि ते सकल प्ररोचनामयी मनोहारिणी गाथाम् । तिष्ठ मौनमालम्ब्यैव । यद्यह कथयेयन्ते रहस्य, प्रकटयेय वा त्वदीया कृतिं, दर्शयेय चेत्त्वदुदन्त जनान्, तदानी त्वमिह स्थातुमपि न पारये: किमधिक कथयामि । [ इत्थ दुर्भावद्योतक वचननिचय श्रुत्वा किञ्चिदाविष्टचेता: भाग्यभूतिरपि सामर्षमुवाच ]—

भाग्यभूति :—अलमलं बहु विकत्थनेन, किमहं दीनो हीनो वाऽति-निर्धनः? मामपि स्वात्मानमिवाऽनुमिनोषि? अरे! रे!! मार्गे मार्गे विलसति वसुन्धरायामपारा सम्पत्। आगन्तव्यमेवास्मदीयवाणिज्य-रत - वणिग्वरदलेन। समीपमुपाश्रिते च तस्मिन् सद्य एव बाह्यभागत एव वामहस्तेन वितरिष्यामि समेषामेषामेतावधच्छ धनन्तु। [इति श्रुत्वा प्रतप्तप्लाभ्यक्त इव पादाभिहत-महाहिरिव क्रोधताम्राक्षः सञ्जात वेपथु: व्यत्यस्तोष्णीषो मल्लिक साक्रोशमभाषत—]

मल्लिक —अरे! रे!! दुरभिमामिन!!! किमर्थं व्यर्थं मा प्रवञ्चयसि? प्रतारयसि वा मिथ्याप्रलोभनानि प्रकटयन् मुग्धान् मान-वान्? जानामि ते सम्यक सकल दुरभिसन्धिम्। पश्य, पश्याधुना किमहं ते करोमीति | विभीषिका दर्शयति ]

भाग्यभूति :—यथाभिलषित विधेहि, यद्रोचेत् तत्करोतु भवान्। यावन्न मे व्यवसायिनो वाणिज्यरता वणिग्वरा समायान्ति न तावत् किमपि भवद्भ्यो दातुं समर्थ तावत्काल तु प्रतीक्षा करणीयैव, तदनन्तरन्तु सर्वेषा सकलमेव धन प्रत्यावर्तयिष्यामि, नाहं कपर्दिका-मात्रमपि रक्षयिष्यामि, अवशेषाम्। [सर्वं तत्कथन श्रुत्वा मल्लिको नाम स महाव्यापारिवर्गेऽग्रगण्यो मौनमालम्ब्यावतस्थे। सपदि तस्य मुखमुद्रागमभूत्। यो हि यदर्थं पुरा कोटयधीश एवायमिति कथयित्वा जनान् परिचाययति स्म तम्, स एवाद्य कथमेन द्ररिद्र भिक्षुक लुण्टाकं वा कथितु कथयितु वा शक्नुयात्? कथ वा तस्य निन्दा कुर्यात्।]

तदानीमेव सर्वेऽन्ये व्यापारिणोऽपि समागत्याब्रुवन्—

सर्वे व्यापारिणः—मल्लिक महाजनं लक्ष्मीकृत्य किं भोः महानुभाव! भवान् भाग्यभूतिना सह सम्भाष्य किमस्माक दत्तधनविषये परामर्शं कृतवान्? को वा धनप्रत्यावर्तनार्थ निर्णयो गृहीतो भवता? किं च कथयति सः महाधनिकः परमोदारो भाग्यभूति ?

मल्लिक — बन्धवः ! किं कथयामि, ऋणविषये तु नाहं किमपि तस्मै कमप्युपालम्भं दातुं प्रभुः न वा कमपि शब्दं श्रावयितुं च शक्तः । समालापे तु तत्कथनं समाकर्ण्य स्तब्ध एवाहमभवन् - यतो हि मयाऽपि तस्मै दीनाराणां दश सहस्राणि दत्तानि ।

किञ्च—बान्धवाः ! किम्भो ऋणदानात् पूर्वमप्यहं प्रष्टो भवद्भिः कदाचन ! यदयं कः कीदृशो धनिकः ? कीदृक्स्वभावः ? अस्मद्दत्तं धनं प्रत्यावर्तयितुमपि शक्तो भविष्यति न वेति । अधुना तु सर्वे एव मत्सविधे समागत्य मां समुपालभन्ते तदानीं तु न कोऽपि मामुपेत्य पृष्टवान् !

भ्रातरः ! नाहं किमपि भवदृणविषये जानामि । भवन्त एव किन्न तं पृच्छन्ति ? सर्वे एव तत्र गत्वा स्वं स्वद्रव्यं ततो गृह्णन्तु । यदि स तथा कर्तुं असमर्थः सिध्येत् - द्रव्यं वा न प्रत्यावर्तेत तदा भवन्तो न्यायाधीशं सम्राजं अन्यं मध्यस्थं सज्जनं यं कमपि जनं यशश्च समुपागच्छेयुः । तं प्रत्यभियोगं वा कलयन्तु । इति ।

[ततः सर्वे व्यापारिणः संहत्य तत्रत्यं सम्राजं स्व-स्ववृत्तं निवेदयितुं समुपस्थिता अभूवन्]

[ २ ]

सर्वे ऋणदातारः—[भाग्यभूतिना कृतं द्रव्यादानरूपं सकलं कर्म सविस्तरं वर्णयितुमारभन्त ] देव ! वयमेनं भाग्यभूतिं दीनोस्तीति कथयितुमपि न शक्नुमः कथमयं निर्धनः परिकल्पनीयः ! यतो हि पश्यतामेव सर्वेषां नः सकलं धनं - यद्धि ऋणरूपेणाऽस्मद् गृहीतं - सद्य एवानेन भिक्षुकेभ्यो दीनेभ्यो ह्यनाथेभ्यश्च वितरितम् ! किम्बहुना दीनारास्तूभाभ्यामेव कराभ्याममददादनाथेभ्यः । तर्हि कथं निर्धनोऽयं वाच्यः ! न हि निर्धनः कदाचिदपि यस्मैकस्मैचिदेतावतीः स्वर्णमुद्राः दातुं शक्नोति । मन्ये हि दानदक्षिणार्थमेवानेनैतावत्यः सुवर्णमुद्राः गृहीता इव हस्तस्पृष्टा एव तत्क्षणं वितरिताः ।

यदि चाय धनवानुदारो वा कथ्येत, तदपि न सध्रीचीन प्रतिभाति, एतावत्कालपर्य्यंत प्रतीक्षमाणा सर्वे वय न पश्यामस्तत्कथनानुसार प्रत्यावर्तमान तदीय वाणिज्यसलग्न प्रदेश देशान्तर वा गत वणिग्वरकुल, बलीवर्दसममर्दञ्चेति। यद्धि प्रदेशाद् वाणिज्यव्यवमायेन समाहृत्य धनरत्नराशि प्रत्यागमिष्यमाणमपि, नाद्यावधि समायान्तम्।

[ इति तेषामुभयविध वर्णन श्रुत्वा राजराजो महाराजः सम्राटपि तस्मिन् सुदृढ विश्वासमदधात्, निश्चिनुयाच्च - यदय धनरत्नसम्पन्नो महोदार प्रकृष्टो जनः। अवश्यमेव भवितव्यमस्य तादृश वैभव, तावानेव च बलीवर्दसम्मर्द तावत्परिमाण वा वाणिज्यरत वणिग्वरकुलम् विविधखराश्वाऽश्वतरबलीवर्दसङ्घसमाकुल व्यवसायार्थमेव सुदूर प्रदेशगतमिति।]

सम्राट् राजराजो ह्यतीव लोलुप आसीत् - यदा स ज्ञातवान् यदय भाग्यभूतिः सहस्रशो दीनाराणा रत्नाना निचय दीनेभ्यो याचकेभ्यो ह्यनाथेभ्यश्च निःसकोच वितरितवान् उभाभ्यामेव कराभ्या निर्लोभ दत्तवाश्च, तदा किमर्थ न ततो लाभः सम्पादनीयः। तदीयया सम्पत्त्या वाऽऽत्मकोष पूरणीयः।

इति विचिन्त्य सम्राजाऽपि सद्यः समागतास्ते तद्विरोध कुर्वन्तः अभियोग वा समारब्धुकामाः आसन् सहसा मधुरालापै सम्बोध्याऽनुपद-मेव प्रत्यावर्तिता, सान्त्वनया स्व-स्वगृह यापिताः। तत स्वकीयममात्य-माहूय जगाद मधुरं स सम्राट् :—

सम्राट् :—प्रियवर मन्त्रिमहोदय! गच्छ सम्प्रति भूरि सम्मानेन भाग्यभूतिसमीप—सम्पादय च तेन सह मैत्रीमिति। यतो हि तस्य वणिग्वरदल व्यापारिकुल-यद्धि सुदूर वाणिज्यार्थं गतमस्ति-तद अद्य श्व परश्वो वा समागन्तेव। एते नागरिका व्यापारिणोऽपि तदेव प्रतीक्षन्ते

तदागमनप्रतीक्षयैव विश्वास विधाय काल यापयन्ति । सम्प्रति च ते तदीये धनरत्नराशौ दत्तदृष्टयो लोलरसना तीक्ष्णदशनाः करालदष्ट्रा' बकध्यानाः सन्ति तदीया वा सम्पद भक्षयितुमुत्का. जागरूकाश्च विद्यन्ते यावद्धि ते न तस्य सम्पत्ति भक्षयेयु तत पूर्वमेव भवान् तत सम्बन्ध मैत्री वा विधाय सयोज्य तत्कसम्पत्तिरक्षण - करणीयम् । सकला वा सम्पत्ति राजकोष स्थापयितु न्यासीकर्तु वा स समाराधनीय , अत सतर्कैरेवास्माभिर्भवितव्यम् । तदर्थं यद्यावश्यकता भविष्यति तदा तेन सह राजकुमार्य्या पाणिग्रहणविधिरपि सम्पादनीयो भवेत् सोऽपि विधातव्य । जाते चैव सुदृढतरसम्बन्धे तस्य सकला सम्पत् स्वात्म-सम्पत्त्या सयुज्य ह्यनन्तगुणा भविष्यति सुसमृद्धो बृद्धो वा राजकोष ।
[ इति सम्राण्मुखात्सकलमुदन्त श्रुत्वा हार्दञ्च विज्ञाय - प्रोवाच सविनय राज्यभारवहोऽमात्य --

अमात्य --महाराज ! श्रीमन्तोऽपि लोभाभिभूताः कुतस्तत् प्रतारणाया पतिता ह्यभूवन् । न सम्यग् जानन्ति स्वामिनस्तच्चरितानि स हि महामहावञ्चको नितान्त धूर्तो मिथ्याऽऽलापी मधुरगिरा प्ररोचनया च समस्तजन - धनहरो लुण्टाक इति ।

सम्राट् --एवञ्चेत् तर्हि प्रथममह तस्य परीक्षा करिष्यामि । सम्यक् परीक्ष्य च द्रक्ष्यामि । स प्रकारोऽपि मया ह्यालोचित । यदि सकलमेतन्मिथ्या सेत्स्यति, तर्हि प्रतारकस्य तस्य स्वात्मकरवालेनैव तस्य शिर कायात् सद्यो भुवि विलोलयिष्यामीति प्रत्यवोचत् ।
[ ततोऽमात्यः सद्यो भाग्यभूति समाहूतवान् । भाग्यभूतिरपि निर्भय सम्राजः समक्षमुपस्थितोऽभूत् ] प्रणम्योपविष्टश्च ।

सम्राट् -- ( भाग्यभूति लक्ष्यीकृत्य ) किं भोः महानुभाव ! अस्मन्नागरिकाणा भवानधमर्णः ? गृहीत तु किं भवता नो नागरिकेभ्योऽशीतिसहस्र दीनाराणामृणम् ?

भाग्यभूति --ओम् भगवन् ! अहमेवास्मि युष्मन्नागरिकाणा-मधमर्णो ह्यधमः । सत्यमेवैतत् ।

सम्राट्--तर्हि किमर्थं नाद्यावधि समभूदृणमुक्तः । समुत्तीर्णर्ण-कपारोवा ।

भाग्यभूतिः—यतो हि नाद्यावधि प्रत्यागत मे सार्थवाहि व्यापारि-कुल - यद्धि धनोपार्जनाय प्रदेश प्रस्थापितमिति । यावच्च वणिग्वर-दल बलद - बारूदसयुत - धनमुपार्ज्य नाऽऽयास्यति चेत्, न तावत् स्वात्मानमेतस्मादृणान्मुक्त कारयितु क्षम । समायाते च तस्मिन् सर्वेषा सकल धन द्विगुणमपि प्रत्यावर्तयितु सन्नद्धोऽस्मि, सद्यो दास्यामि वा तेभ्यो यथेष्ट यथाभिलषितञ्च धन रत्नादिकञ्चेति । यतो हि बहु सुवर्ण रत्ननिकर वस्त्राभूषणानि च समानेष्यन्ति मामका व्यापारिण । अतो यो यद्यद् गृहीतु ह्यभिलषिष्यति तस्मै तदेव नि सङ्कोच वितरिष्यामि । अपरिगणितानि सन्ति मत्सविधे रत्नाऽऽभरणानि महार्हाणि च वस्तूनि । इति ।

[ ततो भाग्यभूते परीक्षा कर्तु सम्राट् तस्य करे अनन्तदीनारै क्रय्य-ममूल्य रत्न सरक्ष्योवाच ]

सम्राट्—किं भोः ! अस्ति भवत समीप भावत्के वा रत्नराशौ एतादृश रत्नमपरम् ? आनेष्यति वा भवदीयाः सार्थवाहा व्यापारिणो ह्येत दृशमपरमिति । [ भाग्यभूति स्वकरस्थित तद्रत्नं - अग्रत पृष्ठतः पार्श्वतश्च पुन पुनः परावर्त्य बहुकाल सुचिर निर्वर्ण्य सस्मित मन्द विहसन् तद्रत्न सद्यो भूमौ प्रक्षिप्तवान् । स्वपादतलेन च तन्मुहुर्मुहुः सम्ममर्द समुवाच च --

भाग्यभूतिः—ऊँह–किमेतद्रत्नम् ? [ विकृतमुखमुद्रां - दर्शयति ]
[ तस्य तादृशी चेष्टा विलोक्य क्षुब्ध क्रुद्धश्च सम्राट् साक्षेपमुवाच—]

सम्राट्—किं भोः ! महानुभाव ! किमस्ति ते विचितमिद विचेष्टितम् ! को वाऽस्ति ते मानसे विचारसञ्चारः ! किमस्ति वा करणीयम् !

भाग्यभूतिः कियदेव भवत्वस्य मूल्यम्, परञ्च नाधुनाऽस्य मूल्य-दीनारसहस्रतोऽधिक भवितुमर्हति। मत्सविधे तु न जाने कियन्ति सन्त्यतोऽपि वरिष्ठानि ज्येष्ठानि वा महर्घतमानि रत्नानि, मुक्ताफलानि च येषा दर्शनेनैव क्षुधा दूरमपसरति। चेतश्चञ्चल भवति· तरलयतश्च नयनतारके [ गोलके ] विस्फारितानि वा भवन्ति चक्षूषि प्रेक्षण-प्रेयसाम्। इति। सम्राजो लोलुपता तु पूर्वत एव प्रवृद्धाऽऽसीत्—अतः सः नागरिकान् व्यापारिण समाहूय सुमधुर व्याजहार—

सम्राट्—अयि बान्धवा ! भवन्तो हि निज निजदत्तर्णे न कामपि चिन्ता कुतर्क वा कुर्वन्तु। यद्यप्यधमर्णो हि सः तथाप्युत्तमर्णान् वः स्वोदारविचार व्यापारेण प्रह्लीकर्तु प्रभुः। ऋणविषये तु न भवद्भिरणुमात्र-मपि चिन्ता कार्या। यतोहि—प्रदेश प्रेषितमस्य सार्थवाहिकुल वणिग्वरदल—सद्य एवावश्यमेवागमिष्यतीति। आयाते च तस्मिन् सर्वे एव भवन्तस्तस्मात् स्वकीय स्व [ स्व-स्वदत्त धन ] निश्चितमेव लप्स्यन्ते। इत्युक्त्वा तान् सर्वान् विससर्ज।

ततोऽमात्य समाहूय—आज्ञापयामास—अयि ! मन्त्रिप्रवर ! त्वमितः सत्वर गच्छ—भाग्यभूतिञ्च राजभवने, सादर समानय। समानीय च तस्य विविध सम्भारैः सत्कार शुभाऽऽतिथ्यं वा विधेहि। सम्पादय तावत् तदभिलषिता दैनन्दिन समुपयोगे समायाता आवश्यकी सामग्रीम्। ततश्चेदमपि ज्ञातव्य भवता यत् सः कदाचन मामकीनया सुतया सह स्वात्मनो विवाह सम्पादयितुमपि कामयते नवेति। येन वय तदीया सम्पद स्वकोषे निजसम्पत्त्या सह योजयित्वा समृद्धा भवेम। इति।

अमात्यः—महाराज ! इम प्रवासिन सर्वथाऽपरिचित दूरदेशनि-वासिन विलोक्य मम मनसि त्वेषा धारणा—महान् सन्देहो वा समुदेति-

यदय-विश्वसनीयोऽप्यस्ति नवेति। किञ्चैनं राजभवनं प्रवेश्य अस्मत्—सहसवासदानावसरोऽप्यस्मै देयो न वा! सह सवासेन चात्मनः क्षेममक्षेमं वेत्यपि दुर्ज्ञेयमेव। अहन्त्वेनं राजभवनमानीय, स्वरक्षणं न सुरक्षणं शुभंकरं वा मन्ये। यद्यस्यात्राऽऽनयनमावश्यकं प्रतीयते, तर्हि--सम्प्रति का त्वरा। देव! विशेषं न स्यात् तथापि—तावत्पर्य्यन्तं कालं तु प्रतीक्षताम्—यावदस्य व्यापारिकुलं बलदं बालददलं वा प्रत्यागच्छेत्। किमतः परं निवेदयेयम्। (श्रुत्वैव स्वमतविरोधिनीं नीतिमयीमपि हितां गिरं सम्राट्-भृशं कोपाऽऽवेगादग्निज्वालामालाकुल इव शोणितनयनः सञ्जातसकलगात्रवेपथुः सन् सरोषमुवाच--

सम्राट्—हन्त! रे विश्वासघातिन्! दुराग्रहिन्! त्वन्तु पूर्वमेव मत्सुतया सह स्वात्मनो विवाहं कर्तुं कामयसे स्म। परमहमेव न सम्मतं समभवम्। यदा हि सम्प्रति तस्याः सवर्थोपयुक्ते स्थले सुयोग्येन वरेण सह समुद्वाहवार्ता प्रचलिता भवति स्थिरीभवति सुलग्नवेला, तदैव त्वं प्रतीप इव विघ्नमातनुषे। स्वात्मना सह तस्याः पाणिपीडनमीहसे च। जानासि रे! अनेन पुरुषोत्तमेन सह यदि मत्तनयायाः समुद्वाहः सम्पन्नः स्यात् तदा वयं परस्परं सह भावेन, अपरिमितायाः सम्पत्तेः स्वामिनः सर्वविधसम्पन्नाः भविष्यामः। इति।

( तदानीं महामात्यो व्यचिन्तयत्—यद्यहं सम्प्रति विशेषं प्रातिकूल्यं भजिष्यामि, तर्हि सम्राट् अधिकाधिकं क्रुद्धो भविष्यति -अतस्तस्याऽनुकूल्यमेव श्रेयः। भवतु, यथाऽयं प्रसन्नः स्यात् तथाऽऽचरिष्यामि। अधुना भाग्यभूति-समीपं गत्वा सम्राजः सन्देशमेव श्रावयामि—) इति प्रस्थितः। भाग्यभूतेः समीपं गत्वाऽमात्यः सम्राजः सन्देशं श्रावयामास—

अमात्यः—भगवन्! भाग्यभूते! अस्माकं सम्राट् भवतो माहात्म्यगुणगणगरिमाणञ्च श्रुत्वा भृशं प्रीतः स्वात्मजायाः पाणिग्रहणं भवता सह कर्तुं अभिलषति। यद्ययं शुभावहो विधिः सानन्दं सम्पन्नो भवेत्—तदा को नामावशिष्यतेऽपरः शुभावसरः। काऽत्रभवतो विप्रतिपत्तिः?

यद्यनुमति श्रेयस्करी, तर्हि सत्वर स्वसम्मत्या सूचनीयोऽस्माक सम्राट् ।

भाग्यभूति —अमात्यवर्य ! अहमनेन सम्राज समनुग्रहेण तत्र-भवतो महाराजस्य भवतश्च भूरि भूरि समाभार (उपकार) परमानु-ग्रहञ्च मन्ये । किन्तु निवेदनमेतदेव-यन्मम व्यवसायरताः वणिग्वरा व्यापारिण सहयोगिनश्च यावत्सुदूरप्रदेशात्, अत्र न परावर्तन्ते, तावत् प्रतिपालनीयोऽय काल । यतो हि मामकीन सकलः कार्यसम्भार. तदधीन एव । वैवाहिके महोत्सवे हि न्यूनान्न्यूनतर कार्य - नववध्वै पञ्चसहस्रदीनाराणा समुपायनन्त्वावश्यकमेव । विवाहलग्नवेलाया हि दीनान्धकृपणेभ्योऽपि वितरणाय दीनाराणा सहस्रन्त्वत्यन्तमावश्यकमेव । सैनिकाना सन्तोषाय मिष्टान्नवितरणेन साक प्रत्येक शतशत-सुवर्ण मुद्रासम्भृता भस्त्रिका तु परमावश्यकीव । अन्येभ्योऽपि यथायोग्य पारितोषिकादिकदानमनिवार्यमेव । नववध्वै च शतशो रत्नहारादयोऽपि समर्पणीयाः । दासदासीभ्यश्च भूषणानि वस्त्राण्यपि परमावश्यकानि भवन्त्येव । एतदर्थञ्च पर्य्याप्तधनस्यावश्यकता भवति, सा च तदैव साध्या यदा मे प्रदेश गता सर्वे व्यापारिणः प्रत्यागता' भवेयु । यथेष्टञ्च धनरत्नराशि समाहरेयु' । इति ।

तदानी अमात्य सकल वृत्तान्त सगर्व तन्मुखाच्छ्रुत्वा ततः प्रचलितः । सम्राज समीप गत्वा च सर्व तदुक्त वृत्त सविस्तरं निवेद-यामास । राजराजो महाराज. (सम्राट्) भाग्यभूतेर्विचारपरम्परा - मनोभाव महोदारता च विज्ञाय परमविस्मितोऽभूत् । स च सत्वरमेव भाग्यभूतिना सह समालाप कर्तुमुत्सुकोऽभवत् - तमाहूय पारस्परिक परामर्श विचाराणामादानप्रदानपरिपाटीमारभत ।

सम्राट् —व्यापारिकशिरोमणे ! अमात्यमुखात् प्रस्तावितोऽयं पाणिग्रहणमहोत्सवस्तु समाराधनीय एव । एतदर्थं यद्यद्वस्तु समपेक्षणीय भवेत् - यो वा महोद्भवेऽर्थव्ययो भविष्यति - सर्वं तत् वस्तुजात, सकल;

सर्वविधो वा धनव्ययोऽस्मद्राजकोषात् करणीयः पूरणीय, समासादनीयश्च भविष्यति। अहं स्वयमेव सर्वं विधास्यामि नाऽत्र काचनचिन्ता भवता करणीया। यतो हि - सम्प्रति राजकोषः सर्वविधधन - रत्नराशिसम्भृत परिपूरितश्चास्ति। अतो यावान् धनराशिः, यत्किमपि वा रत्नाऽऽभरणादिकं वध्वै दातु काम्येत, तत्सर्वं मदीयराज्यकोषात समासाद्य साम्प्रतिकी आवश्यकता पूरणीया। दीयताञ्च यथेच्छ वध्वै शुभालङ्करणादिकम्। यदा च पुनः भवतः सहयोगिकुल धन - रत्न - समृद्धं समागच्छेत् तदा ततो गृहीत्वा भवदीयधनरत्नादिभिस्तथैव पुनः पूरणीयो मे कोषः। एवमादानप्रदानेन न भविष्यति कस्यापि काऽपि हानिः प्रत्युत लाभ एव भविष्यत्युभयत्रैव। अतः कार्यमाधने न सम्प्रति विप्रतिपत्ति समुत्थापनीया। वैवाहिक मुहूर्तमपि न स्थगितीकरणीय, न वा ममोत्साहक्षतिर्विधेया। समासादनीयोऽय माङ्गलिको विधिः। नाधुना रोचते मह्य प्रस्तावितोत्सवावरोधविधिः।

(इत्थ मधुरालापेन स्निग्धव्यवहारेण, सत्कारसमाराधनेन सम्राट्, भूयोभूयोऽनुरोधेन भाग्यभूतिं स्वानुकूल चकार भाग्यभूतिश्चापि सम्राजोऽनुरोधममन्यत)

[ ३ ]

तत्रत्यमहाराजकन्यकायाः पाणिग्रहण - महोत्सवः समारब्धः समभवत्। नानाविधानि साधनानि सङ्कलितान्यभूवन्। सौभाग्यसूर्योऽपि भाग्यभूतेः समुदितो जातः। सम्प्रति हि भाग्यभूतिः विशिष्टवेषविन्यासैः विविधमणिगणानुगुणित महामहाद्युतिदीप्ताभिर्नानारत्न - हारावलीभिः समलङ्कृत वक्षस्तटीकः, वरस्वरूपेण विशिष्टे वरासने समुपविष्टः शोभते स्म। तत्सम्मुखे च नाना नटनर्तक्यो, मङ्गल - तूर्यवादकाः मधुरसङ्गीतकलाकुशलाः गायकाः, हास्यविनोदमोदपीयूषपूर - प्रवाहकाः विविध - विचित्रवेषै विकृताङ्ग - भङ्गिभङ्गुरै, भावहावदर्शिनो-

विदूषका अन्ये च देशविदेशतः समागता रसप्रदा कोविदा स्वात्मनो रचनाचातुरी, कलाकौशल, प्रदर्शयितुमारभन्त। तदानी समन्तत· प्रासरन् परिहास रसप्रणाल्य। एकतश्च मल्लाः मल्लयुद्धकला प्रादर्शयन्। विवाहदिने तु सर्वं दिन याचकेभ्यो दीनेभ्यः समागतनट-नटीभ्यो, विदूषकादिभ्यश्च यथेच्छ पारितोषिकं दत्तम्। रजत-सुवर्ण-वस्त्राभूषणाना वृष्टिरिवाऽभवत्। कि बहुना राजकीयकोषात् सुवर्णरत्न - दीनाराणामाहरणे [ बहिर्निष्काश्य वितरणे तु | कार्यकर्तृणा हस्तपादा अपि भृश व्यथन्ते स्म। कोषाध्यक्षो विशेषस्तु महामन्त्री चापि कोषस्य रिक्तत्वशङ्कया-नितान्त शङ्कमाना सन्तप्ता इव तत्राऽऽ-गताः यत्र स भाग्यभूति· सहर्षं निःशङ्क दीनान्ध - कृपणेभ्यो धन-सुवर्णादिक वितरति स्म।

तत्रागत्य महामात्य समीपमुपसृत्य भाग्यभूते· कर्णे शनैः शनैर्निवेद-यामास कोषस्य तात्कालिकी स्थितिम्।

भाग्यभूतिः—देव! महामनः! दानशीलमहानुभाव! किञ्चिन्मात्रा दयादृष्टि स्वश्वशुरस्य मानमर्य्यादासरक्षणेऽपि विधेहि। तस्य भवतः श्वशुरस्य सम्राजो गौरव, तदीय कोषोपर्य्येव निभृतमास्ते। सम्प्रति कोषस्यस्थितिर्विचारणीयैव रिक्तीभूते च कोषे राजस्य सम्राजश्चापि महत्त्व नष्टप्रायमेव। अतो किञ्चिद्विविच्यैव समुदारता प्रकटनीया। भवन्तोऽपि सम्मान्याः। सम्प्रति भवानपि जामाता ममभूत्। श्वशुरगृह-मपि भवत एवेति, किमधिकम्। [ यदा कथनस्यास्य कोऽपि प्रभावो भाग्यभूतेरुपरि नाऽपतत् स च सर्वं तच्छ्रुतमप्यश्रुतमिवाभूत् तदा पुनर-मात्य' सेषत्कोपमुवाच—भगवन् भाग्यभूते! इत्थ दानरते भवति तु भगवानपि नानुकम्पयिष्यति। स्वात्मन्येव किञ्चिद्विचारय—यद्धि नगर-स्थाना सर्वेषा व्यापारिणा तु रजतसुवर्णादिक भवता व्यर्थमेव [ ऋण-रूपणावाप्य ] इतस्ततो दीनान्धकृपणेषु प्रक्षिप्तमेव। अधुना राजकीयः

कोषोऽपि दानपरायणेन भवता रिक्तीकृतः। कृपया तस्यापि निरीक्षणन्तु क्रियताम्। इति।

भाग्यभूतिः—किञ्चिद्विहस्य— भगवन्! अमात्यवर्य! अस्मिन् परोपकार - कर्मणि का ते हानि। अहमपि यत्किमपि करोमि तत्स्वात्मनः शक्तिं विचिन्त्यैव कुर्वे नाहं शक्ने' पर किमप्याचरामि। किञ्च—

"अद्यश्वो वा परश्वो वा व्यापारिनिवहो मम।
आगन्ता, धनरत्नौघ—सम्पन्न सबलो महान् ॥१॥
तदाहं ते खिलीभूत राज्यकोष यथेप्सितम्।
मुक्तामाणिक्यरत्नौघैः स्वर्णमुद्राभृतैर्घटैः ॥२॥
नि शेष पूरयिष्यामि, ह्यातृप्तेस्ते नृपस्य च।
नामराणाञ्च सर्वेषामातृप्तेर्यदभीप्सितम् ॥३॥
तत्तदिच्छानुरूपञ्च स्वर्णादिकमनुक्रमम्।
द्विचतुः पञ्चगुणित दास्यामि विनयान्वितः ॥४॥
ये ये ममोत्तमर्णाश्च, येषामधमर्णं स्वयम्।
तेभ्योऽमित प्रदास्यामि यद्गृहीत चतुर्गुणम् ॥५॥
मा ते चिन्ताऽन्यथाभावो भवेच्चेतसि सन्मते।
भविष्यति तदेवात्र चिकीर्षिष्यति यत्प्रभु ॥६॥ इति ॥

इत्थ सम्पन्ने च वैवाहिके विधौ वरवध्वौ शयनाऽगारे प्रवेशितौ। तदानी भाग्यभूति शयनकक्षे प्रविष्टः पादरक्षणेनैव सहसा स भूमौ निपपात। नयने च तस्याश्रुजलाऽऽकुलेऽभूताम्। सा च नववधू सम्राट्-सुता सत्वर द्रुतगत्या तत्समीपमुपस्थाय तादृशीञ्च तस्य कष्टमयीमवस्था विलोक्य विस्मिता स्तिमिता सती सुमधुरैः वचनविन्यासैः सान्त्वयन्ती प्रोवाच—

राजसुता—नाथ! किम्? किमिदम्? कथमियमकाले मोदप्रमोदावसरे खेदपरिसूचिका नयनयुगलेऽश्रुमाला? कुतो भवान् खेदमनुभवति?

कानामैतादृशी विपत् ? कुतो वा समागता ह्यवितर्कितसम्भवा मानसे गभीराऽधीरादुरन्ता चिन्ता ! यया हि—ममसौभाग्यभूमिर्भवान् शत्रुभूतयाऽनया दशामिमा नीत । तुदति वा हृदयपटलमुपगता पिशाचिनी । इति ।

भाग्यभूतिः—प्रियतमे ! सर्वमिद भगवानेव विजानाति । सर्वस्यास्य निदान तु ते जनकः सम्राडेव ।

राजपुत्री--नाथ ! कथ मे पिताऽस्य निदानम् ? का नाम त्रुटिर्जाता ? यया भवत स्थितिरीदृशी समभूत् ।

भाग्यभूति'—त्रुटिस्तु महती जाता । सर्वजना. तावकीना' भृत्याः सख्य , पदाधिकारिणो नागरिकाश्च—मामेव निन्दन्ति । कथयन्ति च यदनेन वराधमेन न किमपि नववध्वै दत्तम् । न वा राजसुताया स्वरूपानुरूप किमपि शोभन कार्यं (वस्त्राऽऽभूषणानयनादिकम्) समासादितमिति ।

परन्तु, किमह कुर्वे, यदि मम सकलो व्यापारिवर्गः, यो हि सुदूर व्यापारार्थ प्रहित', सपदि समागतो भवेत् तर्हि सर्व त्वत्स्वरूपानुरूपमेव किमु ततोऽप्यधिकमपि कृत्वा दर्शयेयम् । किन्तु दुर्भाग्यात् - सर्वथाऽधुनाऽसमर्थ , सर्वथा विवश. । यावद्धि न मे तद् व्यापारिदल वाणिज्यव्यवसायाद्धन समुपार्ज्य नागच्छति न तावत् काल किमपि कर्तुमहमपि पारयेयम् । अतएव तदानी मया विवाहार्थ निषेध. कृत आसीत् । तदागमनावधि यदि विवाहोऽपि स्थगितीकृतोऽभवत् - तर्हि सर्व ममाभिलषित सकलजनमनोरथमय स्वेच्छानुरूप सुकर सुसम्पन्नमपि अभवत् । परन्तु न तव तात सहमतोऽभूत् । नामन्यत च मत्कथनम् । यद्यपि विवाहोऽयमतीव वैभवेन साक सोल्लास सहर्षोत्कर्ष सानन्द सुसम्पन्न समभूत् । किन्तु मया भवत्यै किमपि नोपायनीकृत समुचित भवत्याः स्वरूपानुरूप वस्तुजातम् । अतः सर्वे जना. मा तिरस्कारमय्या घृणावृष्टया दृष्टया विलोकन्ते, विदधति चालोचनाम् ।

राजसुता—नाथ ! किमर्थमेवविधा कल्पना स्वात्मनि कृत्वा व्यर्थ व्यथन्तेऽत्रभवन्तो भवन्त । मैव विचिन्तनीयम् । उदारचरित ! विवाहोत्सव समारोहे तु भवता-लघुतमजनादारभ्य महामहाजनपर्य्यन्त, लघुतमभृत्यादारभ्यमहामात्यपर्य्यन्त सर्वे कर्मचारिण सर्वे नागरिका सकला ब्राह्मणा, याचका पुरोहिता वृत्तीश्वरा: कवीश्वरा:, चारणा: वन्दिनो गायकानायिका (गणिका) दयाश्च नानाविधवस्त्रालङ्कार द्रव्य–दिव्य मणिगणमुक्ताकलापै ससम्मान समर्चिता, तर्पिता:, प्रतोषिताश्चेति कि पुन क्षुद्रतमस्यास्य ( मदर्थमुपायनीभूतवसनाभरणरूपस्य ) विचारस्य चेतसि चिन्तनम् ।

( इत्थ विवाहोत्सवे ह्यपारधनराशेर्वितरणेन सर्वोऽपि कोषो रिक्तोऽभूत् । परन्त्वद्यापि तस्य वाणिज्यार्थं गत सुदूरं व्यवसायेन धन-रत्नराशिसमुपार्जनकरो व्यापारिवर्ग: सम्प्रति न समागच्छन् दृष्टिपथ-मुपगत न वा सम्भावनाऽपि । )

तदानी सम्राजो महामात्य समीपमुपसृत्य सम्राज निवेदयामास–

अमात्य —महाप्रभो ! महाराज ! नि शेषोऽय कोष सम्प्रति नि-शेषता नीत श्रीमता श्रीमता नवजामातृवर्येण । किन्त्वद्यापि न तस्य व्यवसायरत: सुदूर प्रहितो व्यापारिवर्ग प्रत्यावर्तितोदृष्टपथमुपगत नवा तदागमनस्य सम्भावनाऽपि । राजकीय कोषोऽपि सम्प्रति नि शेषो रिक्तपात्रमात्र शेष सञ्जात । किमधुना करणीय कुतो वा समस्त भृत्यजनेभ्योभृति ( वेतन ) वितरण, कथञ्च राज्यकार्यभारसंवाहन (सञ्चालन) इति समाज्ञापयन्तु ।

सम्राट्—( अमात्यनिवेदनं श्रुत्वा ह्यवितर्कितसूचनामाकर्ण्य-सम्राट सहसा विह्वल: समभूत्–अवदच्च–किम्, किमु, किमुक्त भवता ? किं करणीयम् ?? अधुनेति ।

अमात्य·—प्रभो ! मया तु प्रथममेव निवेदितम्, यदस्यलुण्टाकस्य को विश्वासः । इति । स्वामिन् ! यदि ममाभिप्रायोऽभिमत , सम्मतिश्च मे समपेक्ष्येत–तदाऽहन्तु स्पष्टमेव ब्रवीमि-यत्–लुण्टाकोऽय वञ्चको धूर्तो-मिथ्यावादी प्रतारणदक्षश्चेति । नास्य सविधे कोऽपि व्यापारिवर्गो न वा सार्थवाही (सहयोगी) अयन्तु केवलमस्मान् प्रतारयत्येव। वञ्चयित्वा च श्रीमन्त श्रीमता राजकुमार्य्या सह स्वात्मन समुद्वाहोऽपि कारितोऽनेन । किम्बहुना वाग्जाल वितत्य स्वात्मन औदार्यं प्रकटयन्नेव राजकीय कोषोऽपि नि सङ्कोच धन–रत्नानि वितरन् रिक्तीकृतो दुर्विनीतेन ।

प्रभो ! कियत्कालमय दुर्विनीतो निष्कर्मा केवल हठधर्मा नगरेऽस्मिन् सस्थापनीय कि न शीघ्रातिशीघ्र स्वनगरात् बहिर्निष्काश्यते । कथ वा मिथ्याप्रपञ्चमारचय्य प्रतारणा मुहुर्मुहु कुर्वन्नेष दुरात्मा न दण्डनीय ? किमधिक कथयामि । वयञ्च–स्वमाहात्म्यमूलं राज्यकोष भित्तिमात्रावशेष विलोक्य भृश तुदाम, कोषशक्तेरभावे च कथ वा स्वीय राज्यभार सवाहन कार्यसञ्चालन वा सम्पादयेम । एतदग्रे श्रीमन्त एव प्रमाणम् ।

सम्राट्—( सुदीर्घं नि श्वस्य ) हा, हन्त ! यदि पुरैव सर्वमेत-द्विज्ञातमभवत्–कियत् सुन्दर भवेत् (अभवत्) यद्येतस्मिन् व्यसने ह्यस्ति काचन सत्यता, समुपस्थिते च दुर्वृत्ते, जातायाञ्च दु स्थितौ भवेत् कश्चनप्रतिकारोपायस्तर्हि चिन्तनीय· समालम्बनीयश्चेति। सत्वरं प्रदर्शनीयः सुलभ सुगमो वा निस्तारण· पन्था ।

अमात्य —भगवन् ! किमह निवेदयामि प्रभुस्तु स्वयमेव विज्ञ· तथापि बुद्धिगत प्रकाशयामि कञ्चनोपाय प्रभुसमक्षम् । प्रभो ! साधारणोऽय नियमः यत् पतिः स्वपत्नी सुगुप्तमपि वृत्त स्वात्मचरित वा सुगुप्तगोप्यमपि रहस्य प्रकटयनि - कथयति च हृदयस्थितमपि विचारम । न गोपायति तत किमपि सकलजनावेद्यम् । अतो यदि प्रभुः

स्वसुता राजकुमारी प्रष्टु समाज्ञापयेत्, तदाऽहं तत्समीपमुपसृत्य भवदादेशं सश्राव्य रहस्यं विज्ञातुं यत्नं कुर्य्याम् ।

(अमात्यस्य परामर्शं हितावहं मत्वा सम्राडपि तं तथा कर्तुं समाज्ञप्तवान् । स च निदेशानुसारं तत्र राजसुताया भवने प्रविश्य-एकां जवनिकां निर्माप्य पटाऽभ्यन्तरे च राजसुतां संस्थाप्य समाहूय चैकान्ते स्वयञ्च बहिर्भागे जवनिकाया स्थितः सस्नेहं मधुरवचनैस्तां राजकन्यां पप्रच्छ—वत्से ! राजसुते ! अस्माकीनः राज्यकोषः सम्प्रति जामातृवरेण दातृप्रवरेण रिक्तीकृतः अद्यावधि-नान्यजनः परिलक्षितो ह्यपरिमितो धनराशिः व्यर्थमेवोड्डायितः साम्प्रतं निःशेषं रिक्तोभित्तिशेषतां भजति एतस्य कारणं भवत्याः पतिरेव । प्रत्यहं श्रूयते यत्तस्य भवत्याः पत्युः अस्मज्जामातृवर्य्यस्य प्रदेशं भजतो द्रव्योपार्जनरतः सबलो व्यापारिवर्गः श्व समायाता परश्वो वाऽऽगमिष्यति, मध्येमार्गमेवाधितिष्ठति भूरि-भूरि धनरत्ननिचयसम्भृतो मन्थरगत्या - रत्नभार बाहुल्याच्छनैः शनैरायातीति - नानाविधा चर्चा प्रसरति - परञ्च नाद्यावधि दृष्टीगतोऽभूत् सोऽप्यस्ति नवेति जानात्यपि न वा कश्चित् ? विदितं किमु भवत्याऽपि तद्विषये किमपि ? देवि यद्यत् ते पतिर्भणति, तत्र कियत्सत्यं ? प्रामाणिकं किमु भणितम् ? कियान् विश्वासः करणीयः ? सर्वमेतद्विज्ञातश्चेत् तर्हि स्पष्टं निदर्शय, येन भवत्याः पितृचरणानां अस्माकञ्च सन्तोषो धैर्यञ्च भवेत् । यदि चाज्ञानास्ति भवती - तर्हि यत्नेन वृत्तमिदं निःशेषं विज्ञातव्यं सूचनीयञ्चात्मजनेभ्यः । सकलमिदं महाराजस्य राजराजस्य सम्राजः समादेशेनैव पृच्छामि । इति ।

राजपुत्री—अमात्यवर्य ! मम पतिदेवस्तु मामप्येवमेव नित्यं कथयति - यत् सः नानाविधमुक्ताफल - ग्रथित - तारहारान् राजत-सौवर्णाभरणानि असंख्याः मणयः द्युतिमन्ति च सुवर्णसूत्रकलितानि वासांसि प्रदास्यतीति किन्त्वद्यापि अद्यावधि न तानि तदुक्तानि मुक्ता-

मणि भूषणानि दृष्टिगतान्यभूवन् । एतद्विषये च मया न कदाचन पृष्टो मे पतिः ।

अमात्य. —राजपुत्रि ! तर्हि भवत्या सविनय सानुरोध प्रष्टव्यः स भावत्क पतिदेवः । सर्वविध' प्रकार' प्रयोज्यो येन कार्य-सिद्धिर्भवेत् वस्तुस्थितिश्च परिज्ञाता स्यात् । रहस्यस्य तत्वमपि स्पष्ट भवेत् । ततः सर्वं तदीय हार्द विज्ञाय भवती - मा त्वत्पितरञ्च तेन सत्यवृत्तेन विज्ञापयतु येन वय अग्रिम कञ्चनोपायमात्मसुखकर कलयाम' ।

( 'ओ' मित्युक्त्वा - तत्परामर्शानुसार मर्वं कार्य साधयितु तदुक्ते-कर्मणि प्रवृत्ताऽभवत् सा राजसुता एकान्ते रात्रौ सुखशयनावसरे सप्रश्रय सप्रणय सानुराग - स्वपतिं-तदीयचरणौ सवाहयन्ती सकल तदपृच्छत् )—

राजसुता— प्राणनाथ ! अहमस्मि ते परिणीता नवोढा वधू' ! पतिर्हि स्वपत्न्याः किमपि रहस्य सुगोप्य न रक्षति । अतो निवेदयामि यद् भवान मा स्वकीया अर्धाङ्गिनी मनुते प्रेम्णा च तथैव व्यवहरत्यपि इति तु सत्यम । परमस्ति मे मनसि किमपि कौतुक तन्निवेदयामि तावत् । नाथ ! अस्ति किमु नौ व्यापारिदल सार्थवाही व्यापाररतो वा प्रदेश गतः कश्चन् वृत्तिभोगी वा गणः ? योहि समये सद्यः परावृत्य समुपार्ज्य च पर्य्याप्त धनरत्नराशि समागत्यात्रास्माक कथनस्य पुष्टिं विदध्यात् । समाहृतेन धनेन पुनर्वय स्वकीय राजकीयं कोष पूरित कुर्याम, योहि दानशीलेन भवता रिक्तीकृतः सम्प्रति भित्तिमात्रावशेषता भजति एतद्विषये सर्वं स्पष्ट तथ्यञ्च कथयत्वार्यपुत्रः येनास्माक सन्देहनिवृत्ति - र्भवेत् यद्यत्र काचन विप्रतिपत्तिः, अन्तरायो वा समापतेत् तन्निराकरणे यावच्छक्य यावद्बुद्धिबलोदयमिय ते सहचरी साहाय्यमपि कर्त सन्नद्धाऽस्ति । सर्वात्मना समाचरिष्यति भवदानुकूल्यमेव । यतो हि मामकीनः पिता

ते श्वशुरः सामात्य सम्प्रति सर्वथा विरुद्धोऽविश्वस्त· कथमपि न प्रामाण्य मनुते भवत्कथनम्, किम्बहुना कोष भवतैव रिक्तीकृतं वीक्ष्य भृश क्रुद्धो भवतो मिथ्याप्रपञ्च परिकल्पन विशेषतः प्रतारणापर भवन्त मत्वा, सहसा निगृह्य च राजदण्डेनापि दण्डयिष्यति सद्यः, अद्य श्वः परश्वो वेति।

भाग्यभूति ·— प्रियतमे! प्राणप्रदे! स्वामिनि! एवमस्ति चेत् सकलो राजपरिकर सामात्यो मे वैपरीत्य भजति, विशुद्धभावेन च सत्यमेवास्ति भवती मे प्राणपरिरक्षिका, हृदयस्वामिनी नितान्तमेकान्त-सङ्गिनी सर्वाङ्गीरगा हितैषिणी किमुत "अर्धाङ्गिनीति" तर्हि - अह-मपि न मनागपि मिथ्याप्रवञ्चन ते विधास्यामि - वस्तुस्थितिञ्च यथार्थ-मेव प्रकटयामि इत्युक्त्वा सकला आदितोऽन्तपर्य्यन्त ह्यविकल श्रावया-मास स्वात्मकथाम्। एवमेवेति।

( श्रुत्वा च ता कथा सम्राट्सुता जहास, सस्मित चोवाच—नाथ ! न श्रुतमद्यावधि कुत्राप्येतादृशं जनप्रतारणकौशलन्तु। यद्धि-पश्यतामेव सर्वेषामेतादृश विलुण्ठनमिति। )

राजसुता —प्राणनाथ! इत्थञ्चेद् वस्तुस्थितिस्तर्हि नात्रस्थेय निमेषमात्रमपि। प्रमादतोऽप्यत्र भवान् क्षण विश्राम्यति चेत् - प्राण-सरक्षणमपि दुराराध्य असम्भव वा भविष्यति। अयममात्यः पिता च मे स्वात्मकरकरवालेनैव निर्दय नि सङ्कोच नृशसतया वा शिर· कायात् भूमौ पातयिष्यतस्ते। अतो निवेदयामि यत-अस्ति मत्सविधे पञ्चाशत् सहास्रणि दीनाराणाम्। तद्गृहीत्वा, तत्क्षणमेव, इतोऽन्यत्र कुत्रचनै-कान्ते निरापदि स्थले सकलजनाऽविदिते गत्वा स्वात्मान जनता-नयनाभ्यामगोचर विधाय स्थेय प्रच्छन्नवेषेणैव भवता। यथा कथञ्चन समये समये सङ्केतेनैव स्वकुशलवृत्त वा रूपान्तरेण मत्सविधे प्रेषणीय-मपि येन मद्धृदये विक्लितिः शोकोद्रेको वा सम्भूय मामपि न विह्वल-येत्। इति।

( भाग्यभूतिस्तथैव सर्वं कृतवान् - स हि दासानामेव वस्त्राणि परिधाय सम्राजो वाजिशालातो विशिष्टं हयवरं समासाद्य, तस्यामेव तमिस्रायां ततोऽभूदलक्षितः )

अन्येद्युः सम्राट् स्वसुतां समाहूय सर्वं तदीयं वृत्तं ज्ञातुं तामपृच्छत् । तदानीममात्योऽपि तस्य तत्र तेन साकमासीत् यदा हि जवनिकाऽभ्यन्तरे राजसुता समागता तदा स ( सम्राट् ) तां सस्नेहं धीर-गम्भीरया वाण्या सुमधुरं जगाद —

सम्राट्—वत्से त्वत्पत्युर्विषये किमपि विज्ञातं भवत्या ?

राजसुता तातचरणाः ! निपततु तस्य जिह्वा यो हि मिथ्या वदेत् ।

सम्राट्—किमस्ति तर्हि वृत्तान्तम् ? श्रावय तत्, यद्विज्ञातं भवत्या ।

राजसुता—तातचरणा अद्यैव व्यतीतायामेव निशि कश्चित् सेवको मत्पत्युः समीपं समागत्य पत्रमेकं समर्पितवान् । तदहमपि पठितवती—तस्मिन् लिखितमासीत् यत् पत्युः परिकरनिकरे - यस्मिन् पञ्चशतानि भृत्याः कार्यं कुर्वन्ति तेष्वस्त्वेको नायकः स एव स्वनाम्ना दलं लिखित्वा प्रेषितवान्—लिखितञ्च यत् - सानन्दं समुपार्ज्य प्रत्या-वर्तमानेषु - मार्गे प्रचलत्सु चास्मासु निविडतमेऽस्मिन् महारण्ये-सहसा तस्कराणां लुण्टाकानां द्विसहस्रमिता सशस्त्रा सेना समाक्रामत् । पर-स्परञ्च तुमुलं घोरं युद्धमप्यभूत् । तदानीं प्रवृत्ते च महासङ्गरे बह्वोऽश्वाः अश्वतरा भृत्याः दासा वा पञ्चत्वं गताः । बह्वीच धन-रत्नानां हानिरप्यभूत् । अतएव वयं समये समागन्तुं न प्रभवोऽभूम । सङ्घर्षेऽस्मिन् सप्तति सहस्राणां दीनाराणां, अमूल्य रत्नानामपि महान्तं राशिं करगतीकृत्य प्रधावितास्ते तस्कराः । वयमधुना विपद्-ग्रस्ता स्मः अतः सत्वरमागत्य सन्तारयतु स्वामी दुस्तरादस्मात्सङ्कटात् । इति ।

इत्थ सङ्कटापन्न स्वपरिकर ज्ञात्वा, महतीञ्च धनरत्नराशेर्हानिं विदित्वाऽपि मे पति , न मनागपि विचलितोऽभूत् न वा विशेष चिन्तितश्च । स हि नात्यजत्स्वधैर्यम् । समाश्वास्य च मा स त्वरितमेवाश्वमारुह्य घटनास्थले परिकरस्य वर्तमाना परिस्थिति विज्ञातु साक्षाद्विलोकयितुञ्च प्रस्थितो मे स्वामी । गच्छता च स्वामिनोक्तम् - यदह शीघ्रमेवावशिष्ट परिकरनिकर सधनरत्न स्वात्मना सहैवानेष्यामीति । ( सम्राट् - स्वसुतामुखाच्छ्रुत्वाऽतीव प्रहृष्ट स्वामात्य प्रति परावृत्याब्रवीत् - श्रुत भवता ? नाद्यप्रभृति कदाचन त्वया विरुद्धवचन समुच्चार्यम् स्वजिह्वा सयसयाधुनेति )

[ ४ ]

अत्रान्तरे भाग्यभूति अश्वमारुह्य रात्रौ मार्गे गच्छन् तिष्ठन् धावन्, वनाद्वन पर्वतात्पर्वत समुल्लङ्घयन्, शनै शनै महामरुस्थल प्रति जगाम । परन्तु तस्य मनो नवोढाया सम्राट्सुतायाः सुदृढस्नेहपाशेन सनद्ध तामेव सुभगसुकुमाराङ्गी राजसुतामचिन्तयत् । सपरिश्रम सखेद सकला रात्रियावत् गच्छन् स द्वितीय दिने मध्याह्ने क्षुधित पिपासित कस्यचिद्ग्रामस्य समीप गत । तत्र ग्रामाद्बहिर्भाग एव क्षुत्तृड्भ्या व्याकुल पार्श्वे क्षेत्र कर्षन्त कञ्चन कृषीवल अपश्यत्—योहि बलीवर्दाभ्या स्वक्षेत्रे शस्यसम्पत्ति फलिता द्रष्टुकाम आसीत् । भाग्यभूतिरपि तत्समीप गत । अश्वादवरुह्य तमपृच्छच्च—

भाग्यभूति —को भवान् ! बन्धो ! अस्ति किमु सम्मुखस्थे ग्रामे काचन भोजनसामग्री ! यया क्षुन्निवृत्ति कर्तु पारयेयम् ।

कृषीवल —भगवन् ! अस्माक ग्रामस्त्वतीवनिर्धनो लघुकायश्चेनिनात्र किमपि साधनम्, न वा भोजनालयाना कुत्राप्यत्र स्थिति । क्षेत्रमिदञ्च मामकीनमेव । व्यर्थ किमर्थमेव भवान्, तत्रगन्तु कष्ट कुरुते । अत्रैव क्षण विश्रामतु । अह हि स्वगृह गत्वा भवदर्थं कामपि स्वशक्ति-

साध्या भोजनव्यवस्था विधाय - यदुपलब्ध भविष्यति तदिहैवानेष्यामि। तद् भुक्त्वा, पुनर्यत्रगन्तव्य तत्रस्वोद्दिष्ट पन्थान समाश्रित्य गन्तव्य भवता। तावत्कालन्तु भवताप्यत्रैव स्यातव्यम्। इति त सविनय प्रार्थयामास।

(इत्युक्त्वा स कृषीवलः स्वगृह प्रति गतवान्। पथिको भाग्यभूतिश्च तत्रैव क्षेत्रस्यैकदेशे शीतलच्छायामाश्रित्य त प्रतीक्षनाण स्थितोऽभूत्। बहुकालिकी प्रतीक्षा कुर्वन् स्थितोऽपि भाग्यभूतिः प्रत्यावर्तमान त कृषीवल स्वाभिमुखमायान्त नापश्यत् - तदा व्यचिन्तयत्—यद्—मदर्थमेवाय कृषीवल स्वगृह गत, भोजनसामग्रीसकलने एवाय व्यस्तो नाधुनाऽपि प्रत्यागत.। इयन्त काल स स्वक्षेत्र कृष्ट्वा न जाने किं किं कार्य समसाधयत्। दीनस्यास्यास्मिन् क्षेत्रकर्षणकर्मणि साम्प्रत महती क्षतिरभूत्, इति विचिन्त्य सः भाग्यभूति स्वयमेव तदीय हल गृहीत्वा तस्मिन् क्षेत्रे भूमिकर्षणेप्रवृत्तोऽभूत्। बलीवर्दौ चालयामास च। तदानी बलीवर्दौ क्षेत्रे हल कर्षन्तौ किञ्चिद्दूर गत्वैव सहसाऽवरुद्धावभूताम्। हलञ्च न जाने कस्मिन्नवलग्न समभूत् - यद् बलीवर्दौ पर्य्याप्त तत्कर्षणे हलसमुद्धरणे च यत्न कुर्वन्तावपि नापारयता हलमुद्धर्तुमिति। पुनः पुनस्तौ हलमाकर्षत, परञ्च न मनागपि प्रचलति, न निसरति च तत किञ्चिदपि - इति सहसा तादृशी हलस्थिति दृष्ट्वा परमविस्मयान्वितो भाग्यभूतिः, कौतूहलेन तद्रहस्य ज्ञातु स्वयमपि हल समुद्धारयितु भूमिखननादिक कार्यमारभत। यावद्धि सः खनति तावदेव भूमौ महती शिला पश्यति। दृष्ट्वा च स परमाश्चर्यचकितोऽभूत् यदत्र क्षेत्रे कुत एतादृश्याः शिलाया सम्भवः! इति चिन्तयन्नेव प्रवर्द्धितकौतुक स स्वहस्ताभ्या समस्तेन च स्वशारीरिकेन बलेन यथाकथञ्चित् ता शिलामपसारयति। अपसार्य्य विलोकते च तत्रैका पादसरणि। रुचिरा सोपानाली विलोक्य महती तद्धृदये जिज्ञासा जागरिताऽभवत् - "किमस्त्यग्रे" इति।

सद्यो भाग्यभूतिः तया सोपानसरण्या शनैः शनैः नीचै प्रविशति। नीचैर्गच्छन् पश्यति चैक विशाल भवनमभ्यन्तरे। यस्मिन् नाना शाला-कोष्ठ-प्रकोष्ठ - कक्षोपकक्षादय सुविशालाः सुरम्या आसन्। तेष्वेकत्र कक्षे सुरक्षिता महामहानिधय. समुल्लसन्ति स्म। दृष्ट्वा च स व्यचिन्तयत्, यदत्र पुरा राजभिर्महाराजै सम्राड्भिश्च स्व-स्व सम्पत्तयो-महामणिप्रकरा, माणिक्यमुक्तामणिरत्नादयः सुवर्ण - रजत - मुद्रा - राजत - सौवर्णादिपात्रेषु सम्भृता सुरक्षिताः स्थापिता। सम्प्रति - कालगत्या बहो कालात् भूमिगता अभूवन् सकोषनिधिसम्भृता हर्म्यादयः। तेष्वेकतमोऽय प्रासादो भूभुजामिति।

तत शनैः शनैः स भाग्यभूतिस्तत्र महानिधिदर्शनाय रत्नादिसम्भृत-घटाना निधिपात्राणा समीपमागत्य शनकैश्च क्रमशस्तान् निरावरणान् विधाय यावत् पश्यति तावद्रत्नपुञ्जप्रभापटलेन तस्य चक्षुषी चित्रविचित्रे रत्नज्योतिरुपहते अभूताम्। भाग्यभूतिश्चावितर्कितसम्भवा निधिलब्धि विलोक्य क्षणे-क्षणे नवनवा चेतस्थिति अत्यद्भु ता वा विचारधारा कल्पयन्-स्वप्नमिव, ऐन्द्रजालिकी घटनामिवाऽमन्यत। क्षणार्धेन स्वभाग्यो-परि सशयान इव तिष्ठन् विचारमग्न समभूत्। व्यचिन्तयच्च, अहो श्रूयते पुरा बहवो राजानो राजवशा वा आसन्। येषा कुलानि-नगराणि प्रासादा. महामहासमृद्धय', सर्वं कालकलितमिव भूमिसादभवत्। यानि यानि च सुवर्णरत्नमणि माणिक्यादि सम्भृतानि महापात्राणि निधिभूतानि भूमौ निहितान्यासन् तान्यशेषाणि भूमिगतान्येव वसुन्धरायाः वसुन्धरा-त्वमेव प्रत्यक्षीकर्तुं सुरक्षितान्येवासन् विद्यन्ते चाद्यापि वसुन्धरागर्भे। साम्प्रत. तत्र समभूत् महान् मरुप्रदेश इति। जगन्नियन्तुः सर्वेश्वरस्य-गतिं विधिञ्च को नाम जानीयात्। न जाने सः परमदयालु का वा रचना कीदृशी वा नवीना स्वानुकम्पामयी सृष्टि विधातुमुद्युक्तश्चि-कीर्षति। तेषु भूमिनिहितकोषेषु कोऽप्येकतमो वाऽय भवेत्। दैवानुकूल्यात् तस्या वा सम्राट् सुताया सौभाग्यात् मामकीनस्य वा भाग्यस्य समुदयात्

सत्कर्मणा वा पुण्यपरिपाकात्, भगवदिच्छयैव मरुप्रदेशेऽयमपारो निधिः स्वदृष्टिपथमुपगत, समुपलब्धो वा। मन्येऽहं मामकीनेनैव दीनान्ध-कृपणेभ्योवितरितधनराशिना प्रसन्नो भगवान् तत्फलमिव मह्यमपार निधि प्रयच्छति, इति विचिन्त्यातीवप्रसन्न सविश्रम्भ सर्वाणि सुवर्ण-रत्न सम्भृतानि पात्राणि सानन्द सम्यग् विलोकयामास। पुन पुनश्च अनेकधा तानि निधिपात्राणि उद्घाटचोद्घाटच निरीक्ष्य भगवतोऽनु-कम्पामेव मन्यमान भृश तुतोष, तानि च यथावस्थित पुनस्तथैव प्रच्छाद्य बहिरागत्य पूर्ववदेव तां शिला तथैव स्थापयित्वा, तया च सोपानपक्ति-द्वार प्रच्छाद्य तदुपरि मृत्तिका प्रसार्य्य, अलक्षितं च तत् कृत्वा, पुनरपि पूर्ववदेव क्षेत्रे हलकर्षणमकरोत्। दत्तावधानतया च कृषीकर्मणि तथैव प्रवृत्तोऽभूत् यथा कृषीबलः।

अत्राम्यन्तरे कृषीबलोऽपि तस्मै नवागन्तुकायाऽतिथये स्वगृहात् विविधानि पक्वान्नानि निर्माय्य स्वगेहिन्या निर्मितानि सुस्वादूनि सर्व-विधानि-मधुराम्ललवणकटुरसस्निग्धानि समादाय समर्पितवान्।

भाग्यभूतिश्च बहुविधानि पक्वान्नानि विलोक्य कृषीबलस्य सौहार्दं विनयशीलत्व, परोपकारपरायणताञ्च विलोक्य सस्नेहमुवाच—

भाग्यभूति·——भगवन्! कृषीवल! भवान् सुशील परोपकाररत विनयी सुसभ्यो परमसरलस्वभावो मुग्धश्च, महामहाबुद्धिमान् दयालु-श्चेति-किमत. परं भवद्गुणगणान् गणयामि——स्वभावमधुरं ते व्यवहारं विलोक्य भृश प्रीतोऽत्यन्त क्षुधितस्तृषितो नितान्त श्रान्तोऽपि नाहमेकाकी-क्षेत्रे एव तवकृपाफलभूतानि इमानि मधुरमधुराणि भोज्यानि भोक्तुं कामये। यदि विरुद्ध ते ह्यनुचित न भवेत्, भवद्गेहिनी वा नान्यथा परिकल्पना कुर्यात् तर्हि भवद्गृह गत्वा-भवता-बालवृन्देन च भवतो——गेहिन्या वा सहैव भोजने समुपयोगो भवेदेतेषा, तदाऽतीव रमणीय हितावह वा भवेत्।

कृषीबलः——भगवन्! अतिथिबन्धो! यद्यस्ति ममगृहं पवित्रीकर्तुं भवतोऽभिलाषस्तर्हि धन्यं पुण्यतमं वा मे अहोभाग्यं सुदिनञ्चेति-सहर्षं भवान् पदं धारयित्वा पवित्रीकरोतु मे कुटीरम्।

[इत्युक्त्वा उभावेव-कृषीबलो ह्यतिथिश्च गृहं प्रत्यचलताम्] तत्र गत्वा सोल्लासं सर्वे कृषीबलं तदीयाभार्या तस्य बालकाश्च सर्वे समागतातिथिना सह नानाविधपदार्थानां रसास्वादनमकुर्वन्। भोजनाभ्यन्तरे च परस्परं देह-गेह व्यवसायादिविषयिणी वार्ताऽपि प्रासरत्। भाग्यभूतिः क्वचित् कृषीबलस्य कदाचन कृषीबलगेहिन्या कदाचिच्च पक्वान्नानां प्रशंसां कुर्वन् वारं वारं च कृषीवलस्य सौहार्दस्नेहसिक्तं सरसं सरलञ्च व्यवहारं प्रशंसन् परमप्रीत्या भोजनमकरोत्। कृषीबलोऽपि भाग्यभूतेः स्वभावस्य, सरलतायाश्च माहात्म्यं वर्णयन् स्वात्मानं धन्यतमं मन्यमानः सगद्गदं प्रोवाच——भगवन् अतिथिवर्य मदीयपूर्वजन्मार्जितपुण्यपरिपाकेन जातमद्य भवद्विधस्यातिथेः दर्शनसमागमलाभश्च। मन्येऽहमद्यप्रभृति समागतः समुद्भूतो वा ममाभ्युदयः। नाहमधिकं सांसारिकं कष्टमनुभविष्यामि न वार्थक्लेशमिति कथयति ममान्तरात्मा। भगवन्! समागताय भगवत्स्वरूपायातिथये-सत्काराय वा निर्मितानि निर्मापितानि चैतानि भोज्यानि, केवलं भगवन्तमेव विशेषतो लक्ष्मीकृत्य कारितान्यत एवैतावान् विलम्बः समभूत् भोज्यसामग्रीसङ्कलने। एतदर्थं क्षमां याचे।

भाग्यभूतिः——भगवन्! कृषीबल! समालापकुशलो भवान्। सरलो विनीतश्चेति तु स्वभावसिद्धं। दयालुश्चापि भगवन्! समालापप्रकरणे वार्ताप्रसङ्गेन ज्ञायते, यद् भवान् साम्प्रतमर्थकार्श्यं वहति सीदत्कुटुम्बश्चेति। वर्तमानेऽस्मिन् कृषिव्यवसाये श्रमबाहुल्यातिरिक्तं नाधिकं फलमवाप्नोति भवान् न वा क्षेत्रेऽपि श्रमानुरूपाधान्यसम्पत्तिरपिसमुद्भवति न च ते सम्यग् गृहस्थभारसञ्चालनमेवेति मन्ये। भवतो व्यवहारेण च भृशं सुप्रीतोऽहं चिन्तयामि यदि भवान् श्रमबहुलमेतत् क्लिष्टतमं

कर्म परित्यज्य किमप्यन्यत् कर्म समारभेत ततः श्रेयः स्यात्। अतोऽहं भवन्तं साग्रहं निवेदयामि यद् भवान् बुद्धिमान्-श्रमशीलो वार्ताकुशलो व्यवहारदक्षश्चेति सर्वथाऽनुरूप —भगवन् ! मत्सविधे सन्ति पञ्चाशत् सहस्रपरिमिताः सुवर्णमुद्रा । प्रसन्नोऽहं तुभ्यं दातुं सहर्षं समुद्युक्तोऽस्मि । गृहाणेमा । एताभिश्च नानाविधान् व्यापारान् प्रसारय, ततो धनधान्यादिसम्पन्नो धनिकश्च भव। ससुखञ्च गार्हस्थ्यसौख्यमनुभव। एवमेव यदि न गृहीतुकामो भवान्-तर्हि विनिमयेन हि कार्यं समासादय। मत्सविधेवर्तमानं धनराशिमहं तुभ्यं प्रयच्छाम्येव, त्वमपि मह्यं तद्विनिमयरूपे स्वकीयं क्षेत्रमेव-यदस्ति तवसन्निधौ-प्रयच्छेति परस्परं सहयोगेनोभावेव सुखान्युपभुक्तामिति। अतस्त्वरितमेव क्षेत्रविक्रयणं विधाय व्यापारञ्च प्रसार्य्यार्थक्लेशतो मुक्तिं लभस्व। भूमे क्षेत्रगताया अधिकारपत्रञ्च मन्नामाङ्कितं कारय राजमुद्रया च न्यायालयेन प्रामाणीकारयेति।

कृषीबलः—अहो धन्योऽस्ति भवान् परानुग्रहकारी च। इत्युक्त्वा पञ्चाशत्सहस्रसुवर्णमुद्राणां प्राप्तेः वार्तां श्रुत्वातीवप्रसन्नः सकला स्वाधिकारस्था [ क्षेत्रस्था ] तस्मै प्रदाय नियमतो राजमुद्रादिकं विशिष्ट-लेखञ्च प्रदाय तन्मूल्यभूताः पञ्चाशत्सहस्रमिता सुवर्णमुद्रा गृहीत्वा भाग्यभूतिं वारं वारं प्रशंसन् नितान्तं सन्तुष्टोऽभूत्। सर्वञ्च स्वकीयं गृहं सकलाञ्च कृषिसामग्रीं तदधीनामेव कृत्वा स्वयञ्च विशेषव्यवसायार्थं नानाविधव्यापारान् प्रसारयितुं च देशान्तरं गतवान्।

[ ५ ]

भाग्यभूतिश्च तदानीं स्वामिलषितां पुरातन-महामहानिधिसमलङ्कृतं सुवर्णकलशसम्भृतं राजकोषगर्भितां कृषीबलात् क्रीतां तां समासाद्य कृषीबलस्यैव गृहे निवसन् निजभाग्यभूतिमपारां सम्पत्तिं शनैः शनैः तत्स्थानात्—यत्र सा भूमिगताऽऽसीत् निखातिता वा ततः समुद्धृत्य

क्रमेण लोकलोचनानि वञ्चयित्वा स्वगृहे समानीय सुरक्षितवान्। कतिपयदिनानि च तत्रैव स्थितोऽभूत्। तदनन्तर शनै शनै अश्वान् अश्वतरान् ( खच्चर ) खरान् बलीवर्दान्—क्रमेलकाश्चाक्रीणात्। तेषा सरक्षणाय तावत्— सख्याकान् भृत्यानपि नियोजयामास। इत्थ क्रमेण सः पञ्चशतानि-ततोऽपि किञ्चिदधिकानि वाहनानि सकलयामास। तावत्परिमाणाश्च भृत्यानपि सकलितवान्। सर्वाश्च तानेकीकृत्य सर्वविध वाणिज्यव्यवसाय कृतवान्। सर्वानेव तान् विभिन्नव्यापारे सयोज्य तद्द्वारा द्विगुण चतुर्गुण द्रव्योपार्जन कृतवान्। सकलाञ्च तान् स्वभृत्यान् निजपरिजनान् स्वात्मकुलसम्भूतानिव सम्मानयन् व्यापारिणो दक्षा. व्यवसायकुशला समृद्धा वृद्धा मामकीना सहयोगिन सार्थवाहाः सन्त्येते—इति सर्वत्र प्रसिद्धि समुद्घोषञ्चाकरोत्। सर्वविधञ्च व्यवसायमतनोत्। सर्वविधा च धनधान्यादिकी सामग्री-सकलितवान्। मणि-माणिक्य मौक्तिकादीनामपि व्यवसायमतनुत। सकलमिद कार्यं सकला च व्यापारोपार्जिता सामग्री एभिरश्वैरश्वतरै खरैरुष्ट्रैरेव बलीवर्दैश्चाऽऽहृता नीताऽऽनीता वा भवति स्म।

अत्रान्तरे सम्राडपि बहोः कालान्नायान्त भाग्यभूति विलोक्य रिक्त-सकलकोषो नितान्त विह्वलोऽभूत्। वार वारञ्च स स्वसुता समाहूय स्वात्मनो दु स्थिति विज्ञाप्य मुहुर्मुहुश्चिन्तितोऽपृच्छत्—

सम्राट्—प्रियवत्से ! किं कुर्मः, नाद्यावधि समागतस्ते भर्ता, भाग्य-भूतिः ? अस्ति किमु त्वत्सविधे तदीय वृत्तम्। किमर्थमद्यावधि नागतः ? का वा घटना समभूत्। समजनि काचिन्नवीना दुर्घटना ?

जाते ! आगमिष्यति न वा स महात्मा ? कदाचिन्नाऽऽगच्छेत् चेत्, तर्हि किम्भविष्यति राज्यकोषस्य निधेः स्थितिः ? वत्से ! अस्ति तत्सविधे कोऽपि सार्थवाहिनिवहः ? अथवा भवेत् केवल तस्य प्रतारणैव। प्रचलत्यपि

कुत्राप्यस्य व्यापार. किमु ? (इति मुहुर्मुहुः पृच्छन् भूरि भूरि-चिन्तासन्तान - समाकुलो विव्यथे तत्सुता च राजपुत्री स्वजनक वार वार समाश्वासयत्—यत् )

राजपुत्री —पितृचरणाः ! मैव व्याकुलता चित्ते निवेशय । स मे भर्ता - भाग्यभूतिः नि.सन्देह समागमिष्यति, सन्निहितमेव तदागमनम् । स हि निश्चय स्वकीय सार्थवाहिकुल व्यापारिवर्गं स्वात्मना सहैव शीघ्रमेवानेष्यति । नाधिक विषाद कुरु, नास्त्यत्र कश्चन सन्देहः । अहन्तु सर्वात्मना निश्चिन्ताऽस्मि । नाह प्रतारयामि तातचरणान् ।

अमात्यः — सम्राज प्रति - देव ! श्रीमन्तस्तु स्वतनयायाश्चाक-चक्यमय्या मृगमरीचिकारूपिण्या शैलूष्या निपतिताः विश्वास कुर्वन्ति । व्यर्थमेत्र हि प्रतारणाया' खेदमनुभवन्ति । मदीया त्वेषा सुदृढा-धारणाऽस्ति यद् न तस्य भवतो जामातृवर्यस्य सविधे कोऽपि दासो न वा व्यापारिवर्गश्च । स तु श्रीमन्त वञ्चयित्वा वाग्जाल वितत्य च राजकीय निःशेष कोष नि शेष भित्तिमात्रावशेषं ( रिक्त ) कृतवान् । श्रीमत्सुतामपि परिणीतवान् समभवच्च जामाता, ससुखमनुभवति च सर्वं दाम्पत्य सौख्यम् । सम्प्रति सहसा समागत घोरतर प्राणसङ्कट समीक्ष्य निजप्राणरक्षणाय देशान्तर पलायितोऽभवत् । न पुनः प्रत्यावर्तिष्यते हि स धूर्त. । इति ।

तस्मिन्नेव क्षणे कश्चनैक सैनिकः समागत्य सम्राज यथाविधि प्रणाम कृत्वा न्यवेदयत् :—

सैनिकः—जयतु जयतु महाराजः । देव ! सप्रणामं सविनयं साञ्जलिबद्ध निवेदयति भाग्यभूतिः, यद् महाराजस्य प्रतापेन शुभा-शीर्वाद - परम्परया च समागतमहासंकटात् - यथा-कथञ्चित् समुद्धृत्य मार्गेस्थितोऽह शीघ्रमेव महाराजस्य दर्शनेन स्वात्मान पवित्री करिष्यामि

व्यथाञ्चापनेष्यामि, लप्स्ये च यथेष्टं समालापसौख्यं, वात्सल्यानुभूतिञ्चेति।

( एतदाकर्ण्य परिम्लानमुख स सम्राट् सहसैव प्रमुदितोऽभूत्। हेमन्तकालिकी पीयूषवृष्टि प्राप्य सञ्जातद्विगुणित रससञ्चारा नीरसा पीतवर्णप्राया कृषिरिव, स्वाति बिन्दुरसपानमवाप्यचातक सन्ततिरिव, समन्ताद् वितता वासन्तिकी छटा समालोक्य विवृद्ध विनोद - मोदं कलकण्ठकुलमिव, प्राभातिक सुखद - धीर समीर ससर्गेण मोदमाना, बालरविकिरण सुखस्पर्शमवाप्य विकसिता सुमनस्ततिरिव सहसा सम्राजोऽपि हर्षोल्लास विकसिता सुभगरमणीया वदनद्युतिरभूत्। तदानीमेव सूर्योदयात् कौशिककुलस्य दृष्टिरिव महामात्यस्य मुखरच्छटाऽप्यलुप्यत।

सम्राट् —कियद्दूरमस्ति तस्य व्यापारिदलम् ? सैनिक !

सैनिक —अति सामीप्यमेव, महाराज !

सम्राट् —र्तांह गच्छ - अस्मदाशीर्भिरभिनन्द्य सत्वर समागमनार्थं अस्मत्सन्देशेन सूचय त व्यापारिवर्गेश्वरम्।

( इति-प्रणम्य ततः प्रयाति सैनिके ) सम्राट् - अमात्य प्रति वीक्ष्य-किं भो ! महामन्त्रिन् ! अप्यस्त्यधुनाऽपि सन्देहः।

अमात्य :—भगवन् ! अहन्त्वधुनापि सर्वमिहैन्द्रजालिकमेव किं वा तत्कृत, राजपुत्र्या वा विरचित, प्रवञ्चनाप्रकारमेव मन्ये।

सम्राट् -अचिरादेव सर्वं स्पष्ट दृष्टिगतमेव भवति, किमनुमानेन ? ( तदानीमेव भाग्यभूतिः सहसोपसृत्य सम्राजश्चरणौ नतेन मूर्ध्ना हस्ताभ्याञ्च सस्पृश्य, प्रणाममकरोत्। सम्राडपि त सद्यः कराभ्या समुत्थाप्य समाकृष्य च त स्वहृदयेन सयोज्य पुन पुनस्तन्मस्तके स्वहस्तं परामृशन् नयनवार्भिरभिषिक्तं चकार। भाग्यभूतिश्च स्व बाहुवल्लरी

सम्राज कण्ठे निधाय ( निक्षिप्य ) सहर्षं सोल्लास तदीय वात्सल्यसौख्य-मन्वभूत् । परस्पर कुशलवृत्त विज्ञाय, सलापः प्रावर्तत ।

भाग्यमूतिः—तातचरणा ! यावती ह्यनुमिताऽऽसीद्धानिस्ततोऽप्यधिकतरा समभूत् । अहमप्यधुना यदवशिष्ट तदेव यथाकथञ्चित् सुरक्षित विधायाऽऽनीतवान् । विलोकयन्तु तावत् तत्र गत्वा स्वय तातपादाः ।

(इत्युक्त्वा भाग्यमूतिः सम्राज तत्रानीतवान यत्र तदीयाः भृत्या व्यापारिवेषधारिण आसन् यत्र च समग्रधनरत्नराशिसम्भृत कलशैः वाहनै (अश्वाश्वतरखरक्रमेलकबलीवर्दपटलै ) परिराजितो राजप्राङ्गण कुबेरपुरीमपि तिरस्कुर्वन् नवीनामेव काञ्चनच्छटा तनोति स्म । तत्र सामात्य सपरिकर सम्राट्- तत्रागत्य पश्यति - यद् बहुदूरतरा भूमिमभिव्याप्य पञ्चशतमिता हया खरा अश्वेतरा (खच्चर) उष्ट्राः बलीवर्दा स्थिता आसन् - प्रत्येकस्य पार्श्वे उभयत धनरत्नसम्भृताः ताम्र - पित्तल - लोह - रजत - सुवर्ण - निर्मिताः सहस्राधिका कलशाः सुवस्त्रै समाच्छादिता महाकायाः सुस्थापिता लसन्ति)

भाग्यमूतिः —अग्रतोभूत्वा प्रत्येक-कलशसमीपं सामात्य सम्राजं नीत्वा स्वयञ्च, कलशमुखोपरि समाच्छादित आवरणं आच्छादनपात्रं अपसार्य्य क्रमशो दर्शयति—नाद्यसुखस्य पारावारस्येव तरङ्गितस्य सीमा सम्राजो हृदये । पश्यन्तु तातचरणाः ! कलशेऽस्मिन् हीरकहारा. सन्ति । अत्रेमानि पूगीफलसमाकाराणि मुक्ताफलानि । एताः पुरातन्यः सुवर्ण-मुद्राः । इमे इन्द्रनीलमणयः, इमानि पद्मराग-गोमेद - माणिक्य - विद्रुम - गजमुक्तामणिप्रभृतीनि नानारत्नानि पृथक् पृथक् कलशेषु सम्भृतान्यास्थितानि सन्ति । महाराजः स्वयमात्मकरस्पर्शेन पवित्री-कुर्वन्त्विति ममाऽभ्यर्थना ।

(सम्राट्—यदा च स्वमुष्टिसम्भृतानिरत्नानि कलशाद्बहिः निष्काश्य करतले धृत्वा पश्यति तदा सूर्यकिरणसहयोगेन द्विगुणितेन, रत्नप्रभा-पटलेन पराहतचक्षुरभवत् । अन्येऽपि ये ये तानि रत्नानि बहिर्निष्काश्य वीक्षन्ते तेषा चक्षूषि रत्नतेजः पुञ्जपराहतानि अभूवन् । केचन चाकचक्योपहतदृष्टय समभूवन् । यदा च समस्तकलशानामाच्छादनानि समपसारितानि तदानी तु अनेकरत्नाना नानाविध चित्रविचित्र प्रभापुञ्जेन समस्त प्राङ्गण., इन्द्रधनुप द्युतिहारी विचित्रवर्णो व्यराजत । सहसैव भाग्यभूतेर्भाग्यविभूते - वृत्तान्तो विद्युद्गत्या समस्तनगरे प्रासरत् - तत्क्षण एव तत्र दर्शकाना महान् मेलकः समर्दः समभूत् । सम्राजः समाज्ञया च तत्क्षणमेव धननिचयस्य सरक्षणार्थं सैनिकाना सशस्त्राणा व्यवस्था समन्तात् प्रावर्तत) एतवती विभूति वीक्ष्य सम्राट् केवलमिदमेवोवाच—

सम्राट्—किमेतत्कमनीयतम सकल भवदीयमेव ?

भाग्यभूतिः— सलज्जः 'ओम्' इत्युक्त्वा सविनय प्रोवाच-तातपादाः ! एतावदेव लुण्ठनादवशिष्ट किमपि तदेवाहमत्राऽऽनयम् । अतोऽप्यधिकन्तु तस्करैः आक्रमणकारिभिर्विलुण्ठित, न मे हस्तगतमभूदित्येव मे मनसिशल्यमिव दुःखाकरोति मामिति । परन्तु कि कुर्य्याम् । विधेर्विधानमेवैतन्मत्वा सान्त्वयाम्यहमात्मानमिति । उक्तञ्च महात्मभिः—"प्राप्तव्यमर्थं लभते मनुष्यः" इति ।

सम्राट्—अमात्यबन्धो ! दृष्ट भवता ! किमवशिष्यतेऽधुना कथनीयम् !

अमात्य —देव ! अहन्त्वधुनाऽपि सर्वमैन्द्रजालिक, मृगमरीचिकेव प्रलोभनपर मोहकर, शैलूषिकामेव मन्ये । न वस्तुतः सत्यम् । कुतोऽन्यथा ह्यभूतपूर्वाणाममूल्यरत्नाना प्राप्तिः ।

(इति श्रुत्वैव क्रोधान्धः सम्राट् - सहसैव स्वसैनिकान् समादिदेश-)

सम्राट्—यदय दुरात्मा निगृह्य, वध्यस्थल नीत्वा शूलमारोप्यताम् अथवा सुदृढ कारागृहे नीत्वा दण्ड्यतामिति।

( सैनिकास्तथा कुर्वन्ति- )

भाग्यभूतिः—(सम्राजश्चरणौ गृहीत्वा) तातपादाः! क्षम्यत क्षम्यताम्। अलमेतावता कठोरतमेन नृशसितेन दण्डेन। नायमपराधोऽस्य महामात्यस्य। प्राणिमात्रमपि न विश्वसिति विलोक्यैतावन्तं महा-महाप्रभापुञ्जप्रकटितमाहात्म्यवता रत्नाना राशि मनुजभाग्योपलब्धि वा। वस्तुतो दैवी ह्येषासम्पत् न मानुषी मनुजलभ्या वा।

सम्राट्—भवतु, तावत् नाय प्राणदण्डेन दण्ड्यः, भाग्यभूते कथनात् सद्यो विमुच्यताम्। किन्तु नाधुनात·परं दुरात्माऽय महामात्यः पद लब्धुं राजभारसचालन वा कर्तुं प्रभुर्भविष्यति। राजसेवातो बहिष्कृत· कृतश्चेति नगरे डिमडिमघोषेण घोष्यताम्। अद्यप्रभृति ममाय जामाता भाग्यभूतिरेवास्य महामात्यस्य कार्यभारं निर्वहिष्यति। सहैवेदमप्युद्घुष्यते यदय भाग्यभूतिरेव ममराज्यसिंहासनस्योत्तराधिकारी चापि भविष्यतीति। मे शुभकामना, अभीष्टञ्चेति।

किञ्च—महानुभावस्यास्य सकलोव्यापारिवर्गः सकुशल गृहं प्रत्यावर्तितः, इति प्रमोदावसरे - समस्तनगरनिवासिना व्यापारिणा, वणिजा - बन्धुबान्धवाना ब्राह्मणानाभीष्टमित्राणा एकः प्रीतिभोजोऽपि श्वोभविता - अतोऽद्यैवा मया सर्वे नागरिका व्यापारिणो बान्धवाः सहर्ष आमन्त्रिता निमन्त्रिताः सन्ति। अन्ये कलाकाराः साहित्यकाराः पुरोहिताः राजकर्मचारिणोऽपि सर्वे सम्मिलिता भवेयुः प्रीतिभोजे भाग लभन्तामिति। 'सम्प्रति भाग्यभूतेरय निधि· राजकीयकोषे एवैतन्नाम्ना-

सुरक्षितो रक्षणीय. । कोषसंरक्षण - व्यवस्थाऽपि भाग्यभूतिना विधातव्येति ।

तदानीमेव समुपस्थितो व्यापारि - ऋणदातृगणोऽपि समुपसृत्य भाग्यभूतिं साञ्जलिबद्ध निवेदयामास--

उत्तमर्णा व्यापारिण:--भगवन् ! एतत्तु वयमप्यजानीम, यदस्माक धन यदृणरूप दत्त - न कुत्रापि गमिष्यति न वा नष्ट भविष्यति परन्तु वय क्षुद्रस्वभावा, नाधिक धैर्यं रक्षितु प्रभवोऽभूम । स्वस्वभावेन - विवशा वय तथाऽनुचितमुचित वा कर्माकुर्म । अतो दु स्वभावाना सर्वेषा नः क्षम्यतामपराध । धनिकमण्डलेशो मल्लिकनामा व्यापारी, सोऽप्यतीव लज्जितोऽभूत् । तदा समुत्थाय भाग्यभूतिः सर्वान् सम्बोध्य सविनयं प्रोवाच—

भाग्यभूतिः—भवन्तः सर्वे समभृवन् ममोत्तमर्णाः (ऋणदातारः) अत. सर्वान् प्रणम्य निवेदयामि-यद्-यद् यद्-येन येन दत्तम्, तस्य द्विगुण चतुर्गुण स्व-स्व पुनः सानन्द गृह्णन्त्विति । इत्युक्त्वा सर्वेषा धनं प्रत्यावर्तयत् । तत सकलावश्यक कृत्येभ्य निवृत्य भाग्यभूति. स्वकान्तायाः भवने प्रविवेश । महाहर्षवती सती स्वा प्रियतमा कण्ठे समाश्लिष्य हृदयेन संयोज्य-तत्रसहभोजनादिकं विधाय परस्पर प्रणयालापान्, सरस-लीला, रहस्यालापान् वा प्रारभेताम् । ]

सम्राट्सुता—प्राणनाथ ! कुत एतावती सम्पत्ति लब्धवान् भवान् ? अथवा मत्प्रेम्णः परीक्षार्थमेव मिथ्यावचोभिर्व्यामोहयन् तदानीन्तनी तादृशी परिस्थिति परिदर्शयन् तथ्य सुगोप्यमकरोत् ? [ इति श्रुत्वा भाग्यभूतिरपि विपत्काले कृतसहाया स्वा प्राणाधिकप्रिया भामा हृदयेनालिङ्ग्य विचुम्ब्य च तदीयानन सकर्पूरताम्बूलेन सुवासित सत्य प्रोवाच— ]

भाग्यभूतिः—प्रियतमे ! नाहं त्वत्तः किमपि सुगुप्तं रक्षितुं प्रभुः । किम्बहुना स्वात्मानमपि स्वप्राणानपि तवानुकम्पारक्षितानेव मन्ये-सर्वथा सर्वात्मना त्वदधीनोऽस्मि । इति मधुरालापैः सकलमादितोऽन्तपर्य्यन्तं यथार्थं वृत्तान्तं श्रावयामास ।

तदनन्तरं भाग्यभूतिस्तदीयाप्रेयसी सम्राट्सुता च सुचिरं सानन्दं दाम्पत्यसौख्यमन्वभूताम् । ततः सम्राजः प्रतिज्ञानुसारं स एव भाग्यभूतिः समस्तसाम्राज्यस्य सम्राट् राजसुता च सम्राज्ञी ह्यभूताम् । सर्वांश्च राजकर्मचारिणः प्रसादयन् प्रजाः प्रजाः इव पालयन् ससुखं सौदार्य्यञ्च राज्यं कृतवान् । यशश्च भुवि व्यतनोत् ।